अनु ॥ १ ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः॥ ॥ ॐ ॥नारायणंनिखिलपूर्णगु
णैकदेहंनिर्दोषमाप्यतममप्यखिलैःसुवाक्यैः ॥ अस्योद्भवादिदमशेषविशेषतोपिवंद्यंसदाप्रियतमंममसन्नमा
मि ॥तमेवशास्त्रप्रभवंप्रणम्यजगद्गुरूणांगुरुमंजसैव ॥ विशेषतोमेपरमाख्यविद्याव्याख्यांकरोम्यन्वपिचाहमे
व ॥ प्रादुर्भूतोहरिर्व्यासोविरिंचिभवपूर्वकैः॥ अर्थितःपरविद्याख्यंचक्रेशास्त्रमनुत्तमं॥गुरुर्गुरूणांप्रभवःशास्त्रा
णांबादरायणः ॥ यतस्तदुदितंमानमजादिभ्यस्तदर्थतः॥वक्तृश्रोतृप्रसक्तीनांयदाप्तिरनुकूलता ॥ आप्तवाक्य
तयातेनश्रुतिमूलतयातथा ॥ युक्तिमूलतयाचैवप्रामाण्यंत्रिविधंमहत् ॥ दृश्यतेब्रह्मसूत्राणामेकधान्यत्रसर्व
शः॥अतोनैतादृशंकिंचित्प्रमाणतममिष्यते ॥ स्वयंकृतापितद्व्याख्याक्रियतेस्पष्टतार्थतः॥तत्रताराथमूलत्वं
सर्वशास्त्रस्यचेष्यते ॥ सर्वत्रानुगतत्वेनपृथगोंक्रियतेऽखिलैः ॥ ॥ ॐअथातोब्रह्मजिज्ञासाॐ ॥ ॥ ओतत्ववा
चीह्योंकारोवक्त्यसौतद्गुणोततां॥ सएवब्रह्मशब्दार्थोनारायणपदोदितः॥सएवभर्गशब्दार्थोव्याहृतीनांचभूम
तः॥भावनाच्चैवसुत्वाच्चसोयंपुरुषइत्यपि ॥ सएवसर्ववेदार्थोजिज्ञास्योयंविधीयते ॥ ज्ञानीप्रियतमोतोमेतंवि
द्वानेवचामृतः॥ वृणुतेयंतेनलभ्यइत्याद्युक्तिबलेनहि ॥ जिज्ञासोत्थज्ञानजात्तत्प्रसादादेवमुच्यते ॥ द्रव्यंक

व्याख्या
१ । १
॥ १६

चकालश्चस्वभावोजीवएवच॥यदनुग्रहतःसंतिनसंतियदुपेक्षया ॥ नर्तेत्वत्क्रियतेकिंचिदित्यादेर्नहरिंविना ॥ ज्ञानस्वभावतोपिस्यान्मुक्तिःकस्यापिहिक्कचित् ॥ अज्ञानांज्ञानदोविष्णुर्ज्ञानिनांमोक्षदश्चसः ॥ आनंददश्चमु क्तानांसएवैकोजनार्दनः ॥ इत्युक्तेर्बंधमिथ्यात्वंनैवमुक्तिरपेक्षते ॥ मिथ्यात्वमपिबंधस्यनप्रत्यक्षविरोधतः ॥ मिथ्यात्वंयदिदुःखादेस्तद्वाक्यस्याग्रतोभवेत् ॥ मिथ्यायाःसाधकत्वंचनसिद्धंप्रतिवादिनः॥ तच्चमिथ्याप्रमा णेनसतावासाध्यतेत्वया ॥ सताचेद्द्वैतसिद्धिःस्यान्नसिद्धंचान्यसाधनं ॥ साधकत्वंसतस्तेनसाक्षिणासिद्धिमि च्छता ॥ स्वीकृतंह्यविशेषस्यसाध्यासाधकतापुनः ॥ तच्चाविशेषमानेनसाध्यमित्यनवस्थितिः ॥ अनंगीकुर्व तांविश्वसत्यतांतन्नवादिता ॥ तस्माद्व्यवहृतिःसर्वासत्येत्येवव्यवस्थिता ॥ व्यावहारिकमेतस्मात्सत्यमित्येवचा गतं॥व्यवहारसतश्चापिसाधकत्वंतुपूर्ववत् ॥ सत्त्रैविध्यंचमानेनसिद्ध्येत्केनेतिपृच्छ्यते ॥ तस्याप्युक्तप्रकारेण नैवसिद्धिःकथंचन ॥ वैलक्षण्यंसदसतोरप्येतेननिषिद्ध्यते ॥ वैलक्षण्यंसतश्चापिस्वयंसद्भेदवादिनः ॥ असत श्चापिविश्वस्यतेनानिष्टंकथंभवेत्॥ यद्युच्यतेपिसर्वस्मादितिसद्भेदसंस्थितिः ॥ सन्मात्रत्वंब्रह्मणोपितस्मात्तद पिनोभवेत् ॥ ज्ञानबाध्यत्वमपितुनसिद्धंप्रतिवादिनः ॥ विज्ञातस्यान्यथासम्यग्विज्ञानंह्येवतन्मतं ॥ असद्वि

लक्षणज्ञस्यैज्ञातव्यमसदेवहि ॥ तस्मादसत्प्रतीतिश्चकथंतेननिवार्यते ॥ अन्यथात्वमसत्तस्माद्भ्रांतावेवप्रतीय
ते ॥ सत्त्वस्यासतएवंहिस्वीकार्यैवप्रतीतता ॥ तस्यानिर्वचनीयत्वेस्यादेवह्यनवस्थितिः ॥निर्विशेषेस्वयंभाते
किमज्ञानावृतंभवेत् ॥ मिथ्याविशेषोप्यज्ञानसिद्धिमेवह्यपेक्षते ॥ नचावरणमज्ञानमसत्येतेनचेष्यते ॥अप्रका
शस्वरूपत्वाज्जडेज्ञानंनमन्यते ॥ अज्ञानाभावतःशास्त्रंसर्वंव्यर्थीभविष्यति॥ अज्ञानस्यचमिथ्यात्वमज्ञानादि
तिकल्पने ॥ अनवस्थितिस्तथाचस्यादन्योन्याश्रयताथवा ॥ स्वभावाज्ञानवादस्यनिर्दोषत्वान्नतद्भवेत् ॥ अ
विद्यादुर्घटत्वंचेत्स्यादात्मापिहितादृशः ॥ अतोधिकारिविषयफलयोगादिवर्जितं ॥ अनंतदोषदुष्टंचहेयंमा
यामतंशुभैः॥सत्यत्वात्तेनदुःखादेःप्रत्यक्षेणविरोधतः॥नब्रह्मतांवदेद्वेदोजीवस्यहिकथंचन॥यजमानप्रस्तरत्वं
यथानार्थःश्रुतेर्भवेत्॥ ब्रह्मत्वमपिजीवस्यप्रत्यक्षस्याविशेषतः॥ सार्वज्ञादिगुणंजीवाद्भिन्नंज्ञापयतिश्रुतिः॥ ई
शंतामुपजीव्यैववर्ततेह्यैक्यवादिनी॥उपजीव्यविरोधेननास्यास्तन्मानताभवेत्॥ स्वातंत्र्येचविशिष्टत्वेस्थान
मत्यैक्ययोरपि॥सादृश्येचैक्यवाक्सम्यक्सावसाकाशायथेष्टतः॥अवकाशोज्झिताभेदश्रुतिर्नातिबलाकथं॥ ॥१६३॥
अज्ञानासंभवादेवमिथ्याभेदोनिराकृतः ॥ अतोयथार्थबंधस्यविनाविष्णुप्रसादतः ॥ अनिवृत्तेस्तदर्थंहिजि

ज्ञासात्रविधीयते।।यथादृष्ट्याप्रसन्नःसन्राजाबंधापनोदकृत्।। एवंदृष्टःसभगवान्कुर्याद्बंधविभेदनं ।। कार्यताच
नकाचित्स्यादिष्टसाधनतांविना ।। कार्यंनहिक्रियाव्याप्यंनिषिद्धस्यसमत्वतः।।नभविष्यक्रियाकार्यंस्वक्ष्यती
शइतिह्यपि।।कार्यंस्यान्नैवचाकर्तुमशक्यंकार्यमिष्यते।।साम्यादेवनिषिद्धस्यतदिष्टंसाधनंतथा ।। कार्यंसाधन
मिष्टस्यभगवानिष्टदेवता ।। मुख्येष्टंवासुमनसांप्रियस्तदितिचश्रुतिः ।। प्राणबुद्धिमनःस्वात्मदेहापत्यधनादयः।।
यत्संपर्कात्प्रियाआसंस्ततःकोन्वपरःप्रियः।। इत्यादिवाक्यैराकांक्षासन्निधिर्योग्यतायतः ।। तस्मिन्नेवसमस्त
स्येतीष्टेव्युत्पत्तिरिष्यते ।।अत्त्यपूपांस्तवभ्रातेत्यादावावापतोपिच ।। उद्वापाद्वर्तमानत्वादाकांक्षादिबलादपि।
बालोव्युत्पत्तिमभ्येतिनानयेत्यादिवाक्यतः।। आनीयमानदृष्ट्यैवव्युत्पत्तेःसंभवेसति ।। एष्यदानयनायायंकु
तएवप्रतीक्षते ।। व्युत्पन्नोवर्तमानेतुक्रियाशब्देभविष्यति ।। पुनर्दृष्ट्यैवशब्दश्रुतपश्चाद्व्युत्पत्तिमेष्यति ।। वर्तमा
नमतीतंचभविष्यदितिचक्रमात् । आकांक्षादियुतंयस्माद्विधेर्व्युत्पादनंकुतः ।। दृष्ट्याज्ञातपदार्थस्यस्यादाकां
क्षाभविष्यति।।व्युत्पत्तिःप्रथमातस्माद्वर्तमानेऽगतेततः।।इष्टमाकांक्षतेसर्वोनप्रवृत्तिमपेक्षते ।। अपरोक्षंपरोक्षं
वाज्ञानमिष्टस्यसाधनं ।। क्वापिचेष्टातदर्थास्यादत्तिर्हिरसवित्तये ।। वाक्यार्थज्ञानमात्रेणक्वचिदिष्टंभवेदपि ।।न

अनु ॥३॥

चक्षुष्क्षुववह्न्यादावतात्पर्यंश्रुतेर्भवेत्॥ यत्किंचित्करणस्यापियज्ञतैवान्यथाभवेत् ॥ तस्मादुपासनार्थंचस्वार्थे
तात्पर्यवद्भवेत्॥इतिशब्दोन्नयेऽग्नावित्यप्युन्नीतेस्मृतिर्भवेत्॥इतिशब्दव्यपेतानिह्यपिसंतिवचांस्यलं ॥आत्मान
मेवेत्यादीनियोगेऽग्नावपितत्समं ॥ एकवाक्यत्वयोगेतुवेदस्यापिह्यशेषतः॥ वाक्यभेदोनयुक्तःस्याद्योगश्चस्या
न्महाफले॥इतिब्रूयादितिवचोगतमग्नौसमीपगं ॥ कल्पनागौरवंचेत्स्यात्पृथक्तात्पर्यकल्पने ॥ कल्पनागौरवा
देवपदार्थानस्युरेवहि॥प्रमाणावगतत्वंचेत्तात्पर्याणांतथैवहि॥तस्मात्पदार्थेवाक्यार्थेतात्पर्यमुभयत्रच। पृथगे
वचवाक्यत्वंपृथगन्वयतोभवेत्॥अवांतरत्वाद्वाक्यानांवाक्यभेदोनदूषणं ॥ अंगीकृतत्वादपितैःपदानांतुपृथ
क्पृथक्॥क्रियापदेनान्वयस्यवाक्यभेदोहिदूषणं॥प्रत्यक्षादिविरोधेतुगौणार्थस्यापिसंभवात् ॥ अतात्पर्यंपदा
र्थेपिनकल्प्यमविरोधतः॥अतोज्ञानफलान्येवकर्माणिज्ञानमेवहि ॥ मुख्यप्रसाददंविष्णोर्जिज्ञासायाश्चतद्भवे
त्॥कर्तव्यातेनजिज्ञासाश्रुतिप्रामाण्ययोगतः॥प्रत्यक्षवच्चप्रामाण्यंस्वतएवागमस्यहि॥अनवस्थान्यथाहिस्या
दप्रामाण्यंतथान्यतः ॥ मिथ्याज्ञप्तिप्रलंभादेस्तेनवेदविरोधियत् ॥ नमानमपिवेदानामंगीकार्याहिनित्यता ॥
नहिधर्मादिसिद्धिःस्यान्नित्यवाक्यंविनाक्वचित् ॥ अविप्रलंभस्तज्ज्ञानंतत्कृतत्वादयोपिच ॥ कल्प्यागौ

व्याख्या- १।१

रवदोषेणपुंवाक्यंज्ञापकंनतत् ॥ प्रत्यक्षःकस्यचिद्धर्मोवस्तुत्वादितिचोदिते ॥ नबुद्धोधर्मदर्शीस्यात्पुंस्त्वादि
त्यनुमाहतिः ॥ अधर्मवादिनोवाक्यमप्रयोजनमेवहि ॥ धर्माभावोपिनोतेनप्रत्यक्षावगतोभवेत् ॥ अतःसं
शयसंपत्तौवाक्यंप्रत्यक्षवत्प्रमा॥ शक्तिश्चैवान्वितेस्वार्थेशब्दानामनुभूयते ॥ अतोन्विताभिधायित्वंगौरवंक
ल्पनेन्यथा ॥ नचाशक्त्याभिधायित्वंप्रवृत्तिश्चद्विधान्यथा ॥ एतत्सर्वंतर्कशास्त्रेब्रह्मतर्केहिविस्तरात् ॥ उक्तंवि
द्यापृथक्त्वात्तुसंक्षेपेणात्रसूचितं॥प्रमाणन्यायसच्छिक्षाक्रियतेतर्कशास्त्रतः। मानन्यायैस्तुतत्सिद्धैर्मीमांसामे
यशोधनं॥ब्रह्मतर्कंचभगवान्सएवकृतवान्प्रभुः॥ पंचाशत्कोटिविस्ताराान्नारायणतनोकृतात् ॥ उद्धृत्यपंचसा
हस्रंकृतवान्बादरायणः ॥ अतस्तदर्थसंक्षेपादतइत्यभ्यसूचयत् ॥ यतोनुभवतःसर्वंसिद्धमेतदतोपिच ॥ दैवै
श्चदुर्गमार्थेषुव्यापृतोनातिविस्तृतिं ॥चकारैताह्यवज्ञेयायुक्तयःप्रतिपक्षगाः॥ प्रत्यक्षेक्षाक्षमःपक्षंकमेवात्राभि
वीक्षते ॥ तस्मादक्षमपक्षत्वान्मोक्षशास्त्रेभ्युपेक्षितः ॥ स्वयंभगवताविष्णुर्ब्रह्मेत्येतत्पुरोदितं॥सविष्णुराहही
त्यंतेदेवशास्त्रस्यतेनहि ॥ आद्यंतंदेवशास्त्रस्यस्वयंभगवताकृतं ॥ मध्यंतदाज्ञयाशेषपैलाभ्यांकृतमंजसा ॥
अतस्तत्रैवविष्णुत्वसिद्धेर्ब्रह्मेत्यसूचयत् ॥ दोषारच्छिद्रशब्दानांपर्यायत्वंयतस्ततः॥गुणानाराइतिज्ञेयास्तद्वा

अनु न्नारायणःस्मृतः ॥ ब्रह्मशब्दोपिहिगुणपूर्तिमेववदत्ययं ॥ अतोनारायणस्यैवजिज्ञासाऽत्रविधीयते ॥ सिद्ध व्याख्या
॥ ४ ॥ त्वाद्ब्रह्मशब्दस्यविष्णौस्पष्टतयाश्रुतौ ॥ अंभस्यपारइत्युक्तोनारायणपदोदितः ॥ आपोनाराइतिह्याहसएवा १ । १
प्स्वंतरीरितः ॥ कामतोविधिरुद्रादिपददात्र्यास्वयंश्रिया ॥ योनित्वेनात्मनोविष्णोस्तिष्ठंतीत्युदितस्यच ॥
यस्मिन्देवाअधीत्युक्त्वासमुद्रंस्थानमेवच॥नामचाक्षरमित्येवऋचइत्युदितंतुयत् ॥ यतःप्रसूतेत्युक्त्वाचतदेव
ब्रह्मचाब्रवीत् ॥ १ ॥॥ ॐजन्माद्यस्ययतःॐ ॥ ॥ अंतःसमुद्रगंविश्वप्रसूतेःकारणंतुयत् ॥ सूक्तोपनिषदा
ह्युक्तंजन्माद्यस्येतिलक्ष्यते । सृष्टिःस्थितिश्चसंहारोनियतिर्ज्ञानमावृतिः ॥बंधमोक्षावपिह्यासुश्रुतिषूक्ताहरेःस
दा ॥ यंनामानिविशंत्यद्धायोदेवानामितिह्यपि ॥ श्रुतेर्नामानिसर्वाणिविष्णोरेवयतस्ततः ॥ अतोनमुख्य
तोनामतदन्यस्यहिकस्यचित् ॥ गुणाःश्रुताइतिह्यस्मान्नदोषोर्थःश्रुतेर्भवेत् ॥ प्रीत्यामोक्षपरत्वाच्चतात्पर्यंनैव
दूषणे ॥ सर्वेषामपिवाक्यानांमहातात्पर्यमत्रहि ॥ तद्विरोधेनमानत्वंफलंमुक्तिर्हिवाक्यतः ॥ नपुराणादिमा
नत्वंविरुद्धार्थेश्रुतेर्भवेत् ॥ दर्शनांतरमूलत्वान्मोहार्थंचाज्ञयाहरेः॥ नसर्वनामतान्येषांश्रुतावुक्ताहिकुत्रचित् ॥१६४॥
॥अदोषवचनाच्चैवनियमेनहरेःश्रुतौ ॥ अज्ञानंपारतंत्र्यंचप्रलयेऽभावएवच ॥ अशक्तिश्चोदितान्येषांसर्वेषाम

पिचश्रुतौ ॥ जन्माद्यस्येतितेनैतद्विष्णोरेवस्वलक्षणं ॥ अस्योद्भवादिहेतुत्वंसाक्षादेवस्वलक्षणं ॥ कृष्णध्यान
च्छलेनैवस्वयंभागवतेब्रवीत् ॥ अतोजीवैक्यमपिसनिराचक्रेजगद्गुरुः॥ नहिजन्मादिहेतुत्वंजीवस्यजगतोभ
वेत् ॥ हिताक्रियादिदोषंचवक्ष्यत्येवस्वयंप्रभुः॥ निर्गुणत्वंचतेनैवनिषिद्धंप्रभुणास्वयं ॥ भेदेनैवतुमुख्यार्थसंभ
वेलक्षणाकुतः॥ कथंनित्यगुणस्यास्यस्यादैक्यंगुणहानतः ॥ सदैवगुणवत्त्वेस्यभिन्नंस्यान्निर्गुणंसदा ॥ नचमि
थ्यागुणत्वंस्यादनिर्वाच्यस्यदूषणात् ॥ निर्गुणत्वंतदाचस्यादासुरत्वंनचान्यथा ॥ लक्ष्यलक्षणयोर्भेदोऽभेदोवा
यदिवोभयं ॥ इतिपृष्टेतदैक्यस्यगतिरेवनविद्यते ॥ ऐक्याभेदेनशास्त्रेणज्ञेयंतत्स्वप्रकाशतः ॥ भेदेमिथ्यात्वतो
भेदसत्यत्वंस्याद्बलादपि ॥ भेदाभेदौयदितदास्यादेवह्यनवस्थितिः ॥ स्वनिर्वाहकताचेत्स्याद्ग्राह्यंवाहकमित्य
पि ॥ पर्यायोभेदवान्वास्यादनवस्थोभयत्रच ॥ सत्यज्ञानादिकेप्येवंनव्यावृत्त्याप्रयोजनं ॥ व्यावृत्तस्याविशेषत्वे
तदखंडंचखंडितं ॥ निर्विशेषत्वमेतेनमूकोहमितिवद्भवेत् ॥ अभिन्नेपिविशेषोयंबलादापततिह्यतः ॥ विशेष
तद्वतोश्चैवस्वनिर्वाहकताभवेत् ॥ भेदहीनेत्वपर्यायशब्दांतरनियामकः॥विशेषोनामकथितःसोस्तिवस्तुष्वशे
षतः ॥ विशेषास्तेप्यनंताश्चपरस्परविशेषिणः ॥ स्वनिर्वाहकतायुक्ताःसंतिवस्तुष्वशेषतः ॥ अतोऽनंतगुणं

अनु ॥५॥



ब्रह्मनिर्भेदमपिभण्यते ॥ एवंधर्मानितिश्रुत्यातदभेदोप्युदीर्यते ॥२॥ ॥ॐशास्त्रयोनित्वात्ॐ ॥ ॥ शैवा
द्यागमसंप्राप्तदृष्टगेनफलेनतु ॥ तद्वाक्योपमयान्यच्चप्रमाणत्वेनुमीयते ॥ ईशवाक्यत्वतइतिचेत्तद्व्यभिचा
रिणा ॥ अप्रामाण्यानुमाचस्यान्नपृथक्कानुमेश्वरे ॥ पुंस्त्वहेतुबलादेवपूर्वोक्तेनैववर्त्मना ॥ शास्त्रयोनित्वमे
तेनकारणस्यबलाद्भवेत् ॥ नावेदविन्नतर्केणमतिरित्यादिवाक्यतः ॥ तर्कोज्ञापयितुंशक्तोनेशितारंकथंचन ॥
वनकृत्त्वादिरूपेणपक्षभूतस्यचेशितुः ॥ किंचिज्ज्ञत्वंहिपुंस्त्वेनशक्यंसाधयितुंसुखं ॥ वृक्षकृन्नाखिलंवृक्षंवेत्ति
पुंस्त्वाद्धिचैत्रवत् ॥ इत्याद्यनुमयास्पर्धिनानुमानंपरेशितुः ॥ शक्तंविज्ञापनेचातिप्रसंगोनुमयेदृशा ॥ वस्तु
त्वात्तुरगःश्रृंगीपुष्पवत्खंसुतैर्युता ॥ चित्रिणीचरसःषष्ठोरसत्वात्सोत्तरोभवेत् ॥ उपक्रमादिलिंगेभ्योनान्या
स्यादनुमाततः ॥ ३ ॥ ॥ ॐतत्तुसमन्वयात्ॐ ॥ ॥ तएवान्वयनामानस्तैःसम्यक्प्रविचारिते ॥ मुख्या
र्थोभगवान्विष्णुःसर्वशास्त्रस्यनापरः ॥ ४ ॥ ॥ ॐईक्षतेर्नाशब्दंॐ ॥ ॥ ईक्षणीयत्वतोविष्णुर्वाच्यएवनचा
न्यथा ॥ लक्ष्यत्वंक्कापिदृष्टंहिकिंतदित्यनवस्थितिः ॥ माधुर्यादिविशेषाश्चतच्छब्दैरुदिताःसदा ॥ वाक्यार्थो
पिहिवाक्यार्थशब्देनैवोदितोभवेत् ॥ नावाच्यंतेनकिंचित्स्याद्यतइत्यादिकैर्वदन् ॥ अवाच्यत्वंकथंब्रूयान्मू

कोहमितिवत्सुधीः ॥ येनलक्ष्यमितिप्रोक्तंलक्ष्यशब्देनसोवदत् ॥ एकस्यापिहिशब्दस्यगौणार्थस्वीकृतौस
तां ॥ महतीजायतेलज्जायत्रतत्राखिलारवाः ॥ अमुख्यार्थाइतिवदन्यस्तन्मार्गानुवर्तिनां ॥ कथंनजायते
लज्जावक्तुंशाब्दत्वमात्मनः ॥ ॥ ॐगौणश्चेन्नात्मशब्दात्ॐ ॥ ॥ ॐतन्निष्ठस्यमोक्षोपदेशात्ॐ ॥ ॥ आत्म
ब्रह्मादयःशब्दाःसाक्षात्पूर्णाभिधायिनः ॥ जन्मादिकारणंब्रह्मलक्षितंचयदातदा ॥ वंध्यापुत्रोपमंमायाशब
लंवाच्यमित्यपि ॥ कल्पयित्वाविनामानंलक्ष्यंशुद्धंवदन्पदैः ॥ आत्मशब्दोदितस्यैवज्ञानंमुक्तावसाधनं ॥ आ
हश्रुतपरित्यागःस्याच्चास्याश्रुतकल्पना ॥ स्यात्सर्वत्रचयत्रैकमपिलोकोजुगुप्सते ॥ नियमेनोभयंस्याद्धिय
स्यस्वपरयोर्मते ॥ अलंकृतःसदैवायंदुर्घटैरेवभूषणैः ॥ अंधंतमोनित्यदुःखंतस्यस्याद्व्यसनद्वयं ॥ अनंदानाम
तेलोकाअंधेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेऽविद्वांसोऽबुधोजनाः ॥ असुर्यानामतेलोकाअंधेनत
मसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः ॥ इत्यादिश्रुतयोमानंशतशोत्रसमंततः ॥ ॥ ॐ
हेयत्वावचनाच्चॐ ॥ ॥ हेयत्वावचनाच्चैवनात्मागौणःश्रुतौश्रुतः ॥ तमेवैकंजानथान्यावाचोमुंचथचेति
ह ॥ उक्तआत्माकथंगौणोहेयपक्षेह्यसौश्रुतः ॥ परिवारतयाग्राह्याअपिहेयाःप्रधानतः ॥ ॥ ॐस्वाप्यया

त्ॐ॥॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते॥ इतिस्वस्यैवपूर्णस्यपूर्णेप्ययउदाहृतः॥ कथंमायाव्यवच्छिन्नः
पूर्णोमुख्यतयाभवेत्॥॥ ॐश्रुतत्वाच्चॐ॥॥ पदंचनिर्गुणइतिकथंगौणंवदिष्यति ॥ गुणाभावोपलक्ष्यंचेत्प
दंतदपिवाचकं॥ अतोनवस्थितिमुखसर्वदोषमहास्पदं॥ कथमेतन्मतंसद्भिराद्रियेतविचक्षणैः ॥ नचसांख्य
निराकृत्यैसूत्राण्येतान्यचीक्लृपत्॥ भगवान्ब्रह्मशब्दत्वंप्रधानेंगीकरोत्यसौ ॥ समन्वयेप्रतिज्ञातेशब्दगोचरतै
वहि॥ प्रथमप्रतिपाद्यास्यात्तदभावेकुतोऽन्वयः॥ कथंचलक्षणावादीब्रूयाद्ब्रह्मसमन्वयं॥ योसौशब्दस्यमुख्या
र्थस्तत्रैवस्यात्समन्वयः॥ जन्मादिकारणेसाक्षादाहदेवःसमन्वयं॥ उक्तंतदेवजिज्ञास्यंकावकाशोत्रनिर्गुणे॥
कथंचासंभवस्तस्यमुख्यार्थस्यनिराकृतौ॥ मानेनकेनविज्ञेयमवाच्याज्ञेयनिर्गुणं ॥ अमेयंचेन्नशास्त्रस्यतत्रवृ
त्तिःकथंचन॥ तस्माच्छास्त्रेणजिज्ञास्यमस्मदीयंगुणार्णवं॥ वासुदेवाख्यमद्वंद्वंपरंब्रह्माखिलोत्तमं ॥ विज्ञेयवा
च्यलक्ष्यत्वपूर्वाशेषविशेषतः॥ निर्गतंमनसोवाचोयदितत्स्यादगोचरं॥ अस्तुतन्मावदेद्वादीनचास्मच्छास्त्रगं
तुतत्॥ अवाच्यंवाच्यमित्युक्त्वाकिमित्युन्मत्तवन्मृषा॥ अस्मच्छास्त्रस्यचौर्याययततेस्वोक्तिदूषकः॥ जन्मा ॥१६६॥
दिकारणंयत्तत्साक्षान्नारायणाभिधं ॥ वदंतिश्रुतयोब्रह्मशास्त्रंचैतत्तदर्थतः ॥ प्रवृत्तमस्त्ववाच्यंतेनैवंब्रूयाःकथं

चन ॥ सर्वशब्दैरवाच्यंतदुक्त्वातद्विषयंपुनः॥ शास्त्रंवदंतमुन्मत्तंकथंलोकोनवारयेत् ॥ मावदोमाविजानी
हित्यजास्मच्छास्त्रचोरतां ॥ वयंत्वांश्रुतियुक्तिभ्यांबध्वास्मच्छास्त्रमंजसा॥ विचारयामःश्रुतिभिर्युक्तिभिश्चै
वसादरं ॥ अद्भुतत्वादवाच्यंतदतर्क्यज्ञेयमेवच ॥ अनंतगुणपूर्णत्वादित्यूदेपैंगिनांश्रुतिः ॥ अवाच्यमिति
लोकोपिवक्त्याश्चर्यतमंभुवि ॥ ५ ॥ ॥ ॐआनंदमयोभ्यासात्ॐ ॥ ॥ एवंशास्त्रावगम्यत्वेविभागेनसमन्व
यं ॥ आनंदमयइत्यादिनाध्यायेनवदत्यजः ॥ तत्रान्यत्रप्रसिद्धानांविष्णावेवसमन्वयं ॥ शब्दानांप्रथमेपादे
गुणिसामान्यवाचिनां ॥ गुणवाचिनांचप्रथममाहदेवःसमन्वयं ॥ समुद्रशायिनंसर्वप्रसूतिप्रभवंश्रुतिः॥ तदे
वब्रह्मपरममितिसावधृतिर्जगौ ॥ यतोतोब्रह्मशब्दस्यतत्रैवनियतत्वतः॥ येन्नंब्रह्मेत्यादिरूपादभ्यासात्तैत्ति
रीयके ॥ अन्यासुचैतद्रूपासुशाखास्वपिसहस्रशः॥ आनंदमयइत्याद्यैःशब्दैर्वाच्योहरिःस्वयं ॥ उपलक्षणत्वं
शब्दानामानंदमयपूर्विणां ॥ सूत्रस्याल्पाक्षरत्वेनसर्वशाखाविनिर्णये ॥ पुनश्चप्रापकाद्धेतोस्तत्राधिकरणां
तरं ॥ सर्वेवेदाआमनंतियत्पदंत्वितिहिश्रुतिः ॥ आनंदमयरूपेतुब्रह्मणःपुच्छतोक्तितः ॥ समस्ताब्रह्मताप्रा
प्तेरानंदमयनामहि ॥ ब्रह्मशब्दस्यचाभ्यासात्पंचरूपादिषुस्फुटं ॥ ब्रह्मतावयवेपिस्यात्तथावयविनिस्वतः ॥

यथैवकृष्णकेशस्यकृष्णस्यब्रह्मताखिला ॥ दर्शिताचैवपार्थायनिःसीमाःशक्तयोस्यहि ॥ ऋतंसत्यंपरंब्रह्मपु
रुषंकृष्णपिंगलं ॥ विष्णवाख्यमुक्तमन्यत्रह्यूर्ध्वरेतंचतत्प्रति ॥ विरूपाक्षाख्यमपरंब्रह्मोक्तंतद्व्रतेस्थितं ॥ समा
नाधिकृतत्वंचेदुत्तरंनीललोहितं ॥ कृष्णपिंगलरूपेणपुनरुक्तंभविष्यति ॥ ब्रह्माधिपतिरित्यत्रतापनीयश्रुतौ
पुरः ॥ स्वरितब्रह्मशब्दांतंबहुव्रीहित्वमेष्यति ॥ स्वाहेंद्रशत्रुर्वर्धस्वयद्बहुव्रीहितामगात् ॥ तस्मादस्येंद्रएवाभू
च्छत्रुरित्युत्तरश्रुतेः ॥ पूर्वांतस्वरितेपुंसोर्बहुव्रीहित्वमेष्यति ॥ महाव्याकरणेसूत्रमितिस्वरविनिर्णये ॥ ऋतं
सत्यंपरंब्रह्मेत्याद्युद्देश्यद्वितीयका ॥ विभक्तिरूर्ध्वरेतादिःप्रथमारुद्रगोचरा ॥ तस्माद्विष्णुंपरंब्रह्मप्रतिरुद्रोत्र
तेस्थितः ॥ ऊर्ध्वरेताइतिह्येवश्रुत्यर्थोऽवसितोभवेत् ॥ ऋतंसत्यंपरंब्रह्मप्रतिविष्णुंसदाशिवः ॥ ऊर्ध्वरेताध्या
यतिह्शंकरोनीललोहितः॥ इत्यर्थमेतमेवाहनीलग्रीवश्रुतिःपरा ॥ आथर्वणीपरंब्रह्मतस्मादेकोहरिःश्रुतौ ॥
तदेवर्तमितिप्राहकथमेवान्यथाश्रुतिः॥ अवधारयंतीतस्यैवह्यृतत्वादिकमंजसा ॥ एकोनारायणआसीन्नब्र
ह्मानचशंकरः॥ वासुदेवोग्रएवासीन्नब्रह्मानचशंकरः॥नेंद्रसूर्यौनचगुहोनसोमोनविनायकः॥ इत्यादिवाक्य ॥१६७॥
तोविष्णोरुत्पत्तिरवतारगा ॥ मुख्यंब्रह्महरिस्तस्मात्प्रस्तावःपरमित्यपि ॥ मुख्यब्रह्मग्रहेयुक्तेनामुख्यंयुज्य

तेक्वचित् ॥ असंभवेहिमुख्यस्यगौणार्थांगीकृतिर्भवेत्॥ ॥ ॐविकारशब्दान्नेतिचेन्नप्राचुर्यात् ॥ ॥ ॐप्राचु
र्यार्थाश्चमयटः सर्वेऽत्रप्रतिपादिताः ॥ भोग्यत्वमत्रचाद्यत्वमुपजीव्यतयाहरेः॥ महाभोक्तामहाभोग्यइत्यर्थो
न्नमयेभवेत् ॥ महाप्राणोमहाबोधोमहाविज्ञानवानपि ॥ विशेषसामान्यतयाविज्ञानंमनइत्यपि ॥ एकस्यज्ञा
नरूपस्यहरेरुक्तिर्विभागतः ॥ अभेदेपिविशेषेणैवान्यइत्युदितोहरिः॥भेदशब्दाविशेषंतुहरावन्यत्रभिन्नतां॥
ब्रूयुर्हरेर्जीवजडैरपिभेदंहिमुख्यतः॥ब्रह्मतर्कवचोप्येवमतएकःसपंचधा ॥उक्तोन्नमयइत्यादिभृगोश्चैतद्वदिष्य
ति ॥ प्राप्यत्वेनमयट्प्रोक्तेर्नतत्राप्यन्यदुच्यते ॥ प्रचुरान्नादिरेवातोह्यन्नमन्नमयेत्यपि ॥ उच्यतेह्यविशेषेणना
न्यत्किंचिदिहोच्यते ॥ ॥ ॐतद्धेतुव्यपदेशाच्चॐ ॥ ॥ महानंदत्वएवास्यहेतुःकोन्यादितिस्फुटं ॥ उक्तःश्रु
त्यंतरेयस्मात्सुखंलब्ध्वाकरोत्ययं॥करोतिनासुखीभूमासुखंनाल्पेसुखंभवेत्॥ इत्युक्तंयत्प्रवृत्तिश्चनृत्तगानादि
कासुखात् ॥ दुःखाद्रोदादिकाचैवसर्वकर्तृत्वतोस्यच ॥ सर्वशक्तेर्नदुःखंस्यादतःकेवललीलया ॥ प्रवर्तकोनं
चेदेषप्राण्यादन्याच्चकःपुमान् ॥ ॥ ॐमांत्रवर्णिकमेवचगीयतेॐ ॥ ब्रह्मवित्परमाप्नोतीतियत्प्रथमसूचितं ॥
तदेवमंत्रवर्णेनसत्यंज्ञानमनंतवत् ॥ लक्षितंतत्रसत्यत्वंसृष्ट्यान्नप्राणयोरपि ॥ उक्तंज्ञानंतुमनसाविज्ञानेनाप्यु

अनु ॥८॥

दीरितं ॥ अनंतत्वंतथानंदमयवाचाप्युदाहृतं ॥ सद्भावंयापयेद्यस्मात्सत्यंतत्तेनकथ्यते ॥ इतिसृष्टिरिहप्रोक्ता
जगत्सद्भावयापकं ॥ ब्रह्मेतिस्थापनायैवसत्त्वंजीवनमेवच ॥ विशीर्णताचसत्त्वंस्यात्सन्नमित्याहुरेवयत् ॥
अतोद्यताचृतान्नत्वंसत्यशब्दार्थएवहि ॥ प्राणंदेवाअनुप्राणंतिमनुष्याःपशवश्चये ॥ आयुःप्राणोहिभूताना
मितियद्भातिजीवने ॥ उक्तेसदितिधात्वर्थोगतिश्चातोहिसत्यता ॥ प्राणत्वमवबोधार्थोमनुधातुःप्रकीर्तितः ॥
नाल्पेसुखमितिप्रोक्त्यैवानंदमयतोक्तितः ॥ अनंतत्वंसुनिर्णीतंपूर्णानंदोहिनाल्पके ॥ अतोहिमंत्रवर्णोक्तवि
स्तृतिस्तुसमस्तया ॥ क्रियतेपरयायस्मात् ॥ ॥ ॐनेतरोनुपपत्तेःॐ ॥ ॥ इतरोत्रनकथ्यते ॥ पुरुषंवेत्ति
योमुच्येन्नान्यःपंथाहिविद्यते ॥ इतिश्रुतेरन्यवेदीकथंमुक्तिंप्रयास्यति ॥ पुरुषःपरआत्माजोब्रह्मनारायणःप्र
भुः ॥ माहानानंदउद्रिष्णुर्भगओमइतीर्यते ॥ स्वयंनारायणोदेवोनान्यस्यैतानिकस्यचित् ॥ तस्मादोमित्यु
दाहृत्ययज्ञदानादिकुर्वते ॥ सूक्तेनपौरुषेणैनंयजंत्यध्यात्मकोविदाः ॥ इतिपैंगिश्रुतिस्तेननान्यज्ज्ञानाद्विमु
च्यते ॥ ब्रह्मशब्दोदितेतस्मिन्नात्मशब्दंप्रयुज्यच ॥ तस्मादाकाशसृष्टिंचप्रोवाचात्रचतुर्विधां ॥ भूतंभूताभि ॥१६८॥
मानीचतद्देहोंतर्नियामकः ॥ हरिश्चाकाशशब्दोक्तोमुख्यतोहरिरेवच ॥ आसमंतात्काशतेयदाकाशोमुख्य

व्याख्या. ११

तोहरिः ॥ बलज्ञानस्वरूपत्वाद्वायुरग्निरगंनयन् ॥ आपआपालनाच्चैवपृथिवीप्रथितोयतः ॥ उष्टानामाश्रय
त्वेनसएवौषधिनामकः ॥ओषधीषुस्थितोविष्णुःक्षुधितैराश्रितोभवेत् ॥पुरिशेतेयतःसोथपुरुषश्चेतिगीयते॥
क्रियाप्रवर्तकत्वेनप्रादुर्भावोहरेर्जनिः ॥ आकाशादिषुनान्यास्तिह्यभिमानोभिमानिनः ॥ अभिमानिशरीर
स्यसाक्षाद्भूतस्यचोद्भवः॥ एवंदेहादिपर्यंतमागतंहरिमेवतु॥परामृशतितस्यैवपंचरूपत्ववित्तये॥त्यक्त्वाभूता
दिकंसर्वंसवाएषइतिश्रुतिः ॥ सइत्यात्मपदोद्दिष्टएषजीवशरीरगः ॥ सारान्नमयएवायंनलोकान्नमयःप्रभुः ॥
इतितंरसशब्देनविशिनष्टिशरीरगं॥इदमित्येवनिर्देशोवस्त्रप्रावृतवद्विभोः ॥ शिरआदेर्भवेज्जीवशिरआदौव्य
वस्थितेः ॥ तंविदित्वास्यमुक्तिःस्यान्नान्यज्ञानात्कथंचन ॥ ॥ ॐभेदव्यपदेशाच्चॐ॥ ॥ आदित्येपुरुषेचायमि
तिभेदोपदेशतः॥नास्याभेदोस्तिजीवेन ॥॥ ॐकामाच्चनानुमानापेक्षाॐ॥॥नानुमाकामचारिणी॥विमता
निशरीराणिमद्भोगायतनानियत्॥शरीराणीत्यादिकातुतत्त्वज्ञानेह्यपेक्षते॥प्रत्यक्षादिविरुद्धत्वादक्षागमभयो
ज्झिता॥अनुमाकामवृत्ताहिकुत्रनावसरंव्रजेत्॥जडआत्मैववस्तुत्वात्प्रमेयत्वाज्जडंचितिः॥घनआकाशइत्या
द्यावार्यतेकेनहेतुना ॥ नजीवभेदसूत्राणांशंक्यात्रपुनरुक्तता ॥ वाक्यांतरद्योतकत्वात्पृथगित्यत्रपूर्णता॥

अनु ॥ ९ ॥

व्याख्या- ११

ॐ अस्मिन्नस्यचतद्योगंशास्तिॐ॥ ॥योगमन्नमयाद्यैर्यत्फलत्वेनास्यशंसति ॥ स्थानद्वयेप्यतःकोशाएतइत्य
तिसाहसं॥उपसंक्रमणंचैवद्वितीयोद्देशितंप्रति॥अतिक्रमंवदंतंतमुपशब्दोनिवारयेत्॥ अश्रुतस्यातिशब्दस्य
स्थानंदद्यात्कथंपुनः॥श्रुताश्रुतपरित्यागकल्पनेविगतह्रियां॥मृतावेवपरित्यागःकृतोह्यन्नमयस्यच॥ येन्नंब्रह्मे
त्याद्युपासांसामानाधिकरण्यतः ॥ उक्त्वापंचस्वरूपाणांपुनस्तत्प्राप्तिवादिनी ॥ स्थानद्वयगतावेदवाणीतदप
लापिनां॥ तमसोन्यत्रसंस्थानंकथमेवसहेतसा ॥ अधीहिभगवोब्रह्मेत्युक्तोन्नप्राणपूर्वकं॥आहब्रह्मकथंतन्नद्वा
रंतदितिवादिनः ॥ उपसत्तिंकथंविद्युरुपसन्नायहित्रिशः ॥ वक्तव्यंब्रह्मगुरुणाचतुर्वारमथापिवा ॥सकृद्वेत्याग
माब्रूयुःसंप्रदायविदोपिच ॥ तद्यत्किंचित्कथंब्रूयादुपसन्नायदिक्पतिः ॥ नवदेद्ब्रह्मचकथंमायावीनहिवारिरा
ट्॥चष्टइत्येवतच्चक्षुःश्रवणाच्छ्रोत्रमुच्यते ॥ वचनादेववाग्ब्रह्मसृष्टिस्थित्यादिकारणं ॥ तच्चवाधूलशाखाया
मष्टरूपमुदाहृतं ॥ विज्ञानानंदसहितंपृथक्सृष्ट्यादिलक्षणैः ॥ आवापोद्वापतःशाखायतआहुःपरंपदं ॥ यतो
भूतानिजायंतइत्याद्यैर्लक्षणैःस्वयं ॥लक्षितंगुरुणापश्चात्तपसैवापरोक्षितं॥दृष्ट्वैकैकस्वरूपंतुसमस्तोक्तानुदर्श ॥१६९॥
नं ॥इच्छताऽज्ञांगुरोःप्राप्यतपसैवापरोक्षितं॥अब्रह्मेत्येववदतांश्रुतहान्यश्रुतग्रहौ ॥ साक्षाल्लक्षणतांप्राप्ताsवि

तिलज्ञातदुक्तिषु ॥ समीपेसहभोगस्यमुक्तित्वेनोक्तितोसकृत् ॥ भेदोजीवेशयोर्मिथ्येत्येवंमिथ्यास्वयंभवेत् ॥
एतेनमयटश्चैवद्वैविध्येनार्थकल्पनात् ॥ तदन्येषांमतमपिसत्संसत्सुनभासते ॥ अतोनारायणोदेवोनिःशेषगु
णवाचकैः ॥ गुणिसामान्यवचनैरपिमुख्यतयोदितः ॥ अध्यात्मगैश्चप्राणाद्यैस्तथैवह्यधिभूतगैः ॥ अन्नादिश
ब्दैर्भगवानेकोमुख्यतयोदितः ॥ जन्माद्यस्येतिसूत्रेणगुणसर्वस्वसिद्धये ॥ ब्रह्मणोलक्षणंप्रोक्तंशास्त्रमूलंयतस्त
तः ॥ अन्वयःसर्वशब्दानांगुणसर्वस्ववेदकः ॥ शब्दप्रवृत्तिहेतूनांतस्मिन्मुख्यसमन्वयात् ॥ अन्यार्थेष्वल्पताहे
तोस्तन्निमित्तत्वतस्तथा ॥ तद्वाचकत्वंशब्दानांबहुलातिप्रयोगतः ॥ रूढमित्येवसाध्यंस्याद्रूढिर्हिद्विविधाम
ता ॥ अविद्वद्विद्वदाख्यैवमुख्याहिविदुषांतुसा ॥ विद्वद्रूढिर्वैदिकास्यात्सायोगादेवलभ्यते ॥ तस्मान्मुख्यार्थ
ताविष्णोरितिकृत्वाहृदिप्रभुः ॥ समन्वयंसाधयति ॥ ६ ॥ ॥ ॐअंतस्तद्धर्मोपदेशात्ॐ ॥ ॥ देवानांतत्र
शक्ततां ॥ आशंक्यतत्ररूढिंचतच्छब्दानामपिस्वयं ॥ समुद्रांतस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढतां ॥ साधयित्वा
भिदांतैश्चपुनरेवन्यवारयत् ॥ ७ ॥॥ ॐआकाशस्तल्लिंगात्ॐ ॥॥ चेष्टाहिचेतनानांयासाभवेत्तत्प्रसादतः ॥
अचेतनस्वभावस्तुविवरादिःकथंततः ॥ इतिशंकानिवृत्त्यर्थमाकाशइतिनामच ॥ परतोपिवरीयस्त्वपूर्वाल्लिंग

अनु द्धरेर्भवेत् ॥ नभोददातिश्वसतांमार्गंयन्नियमाददः ॥ इत्यादिवाक्यैः ॥ ८ ॥ ॥ ॐअतएवप्राणःॐ ॥ ॥ अ व्याख्या.
॥ १० ॥ ध्यात्ममन्वयव्यतिरेकतः ॥ प्राणादिहेतुतादृष्टेरतिदेशोहितादृशः ॥ लिंगंबलवदेवस्यात्प्रेरकोस्यापियद्धरिः १ । १
॥ ९ ॥ १० ॥ ॥ ॐछंदोभिधानान्नेतिचेन्नतथाचेतोर्पणनिगदात्तथाहिदर्शनंॐ ॥ ॥ नित्यत्वादेवशब्दस्य
तत्स्वभावःकथंहरेः ॥ कथंप्रसिद्धबहुलशब्दानामन्यथार्थता ॥इतिचेत्तद्धरेरेवबाहुल्याच्छ्रुतिलिंगयोः ॥ तादृ
शत्वाच्चतच्छक्तेः ॥ ११ ॥ ॥ ॐप्राणस्तथानुगमात्ॐ ॥ ॥ बाहुल्येश्रुतिलिंगयोः ॥ अन्यस्यमुख्यवाच्यत्व
मितितन्नात्रगस्यहि ॥ विष्णावेवतुलिंगानिप्राणस्थानितुसर्वशः॥ प्राणसंवादपूर्वाणिमुख्यतोजीवगानिच ॥
अभ्यार्चच्छतवर्षाणिप्राणवंशत्वमित्यपि॥तस्मादन्यत्रगैःशब्दैरुक्तन्यायैःसमंततः ॥एकोनारायणोदेवोभण्य
तेनात्रसंशयः॥वासुदेवादिरूपेणचतुर्मूर्तिश्चसर्वशः॥अथवापंचमूर्तिःसप्रोक्तोधिकरणंप्रति ॥ प्रतिसूत्रंप्रतिप
दंप्रत्यक्षरमथापिवा॥तैस्तैर्युक्तिश्रुतिन्यायविशेषैर्योग्यतायथा ॥ बृहत्तंत्रप्रमाणेनबह्वर्थमपिसंग्रहात् ॥ उच्यते
नरबुद्धीनामपिकिंचिद्बहार्थतः ॥ ग्रंथोयमपिबह्वर्थोभाष्यंचात्यर्थविस्तरं ॥ बहुज्ञाएवजानंतिविशेषेणार्थमेत ॥१७०॥
योः॥ ॥ तस्मान्महागुणोविष्णुर्नाम्नामपुनरुक्तितः ॥ १२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्री

मद्ब्रह्मसूत्रानुव्याख्यानेप्रथमाध्यायस्यप्रथमःपादः ॥ १ ॥ १ ॥ ॥ ॥ ॥ ॥
॥ ॐ ॥ लिंगात्मकानांशब्दानांवृत्तिर्नारायणेपरे ॥ चिंत्यते ॥ ॥ ॐसर्वत्रप्रसिद्धोपदेशात्ॐ ॥ ॥ सर्वग
त्वंतुप्रथमंप्रविचार्यते ॥ तत्रतत्रस्थितोविष्णुस्तत्तच्छक्तिप्रबोधकः ॥ दूरतोप्यतिशक्तःसलीलयाकेवलंप्रभुः ॥
इतिज्ञापयितुं ॥॥ ॐकर्मकर्तृव्यपदेशाच्चॐ ॥॥ कर्मकर्त्रोरुत्सर्गतोभिदा ॥ अभेदोपिविशेषेस्याद्बलीसोप्यन
पोदितः ॥ एतद्भावाभिधंलिंगंक्रियालिंगेततःपरं ॥ अंतर्याम्यंतरश्चेतिक्रियाभावाख्यमुच्यते ॥ अदृश्यत्वा
द्यभावाख्यंश्रुतिर्लिंगाधिकापरा ॥ १ ॥ ॥ ॐअत्ताचराचरग्रहणात्ॐ ॥ ॥ अनित्यत्वात्क्रियाणांतुकथमे
वस्वरूपता ॥ इतिचेत्सविशेषोपिक्रियाशक्त्यात्मनास्थिरः ॥ शक्तिताव्यक्तिताचेतिविशेषोपिविशेषवान् ॥
अभिन्नोपिक्रियादिश्चस्वभावइतिहिश्रुतिः॥ज्ञानंनित्यंक्रियानित्याबलंशक्तिःपरात्मनः ॥ नित्यानंदोऽव्ययः
पूर्णोभगवान्विष्णुरच्युतः ॥ इतिपैंगिश्रुतिश्चाहशक्तिसद्भावएवतु ॥ क्रियादिनित्यताज्ञेयातदन्यत्रत्वनित्य
ता ॥ इतिसत्तत्त्ववचनं ॥ २ ॥ ॥ ॐगुहांप्रविष्टावात्मानौहितद्दर्शनात्ॐ॥ ॥ द्वित्वंचैकस्ययुज्यते॥ ॥
ॐविशेषणाच्चॐ ॥ ॥ यःसेतुरितिचैकत्ववचनेनविशेषणात् ॥ ३ ॥ ॥ ॐअंतरउपपत्तेःॐ ॥ ॥ अंतःस्थि

त्वारमणकृदंतरःसउदाहृतः॥रमणंचात्मशब्देनादेयंमातीतिचोच्यते॥ ॥ॐसुखविशिष्टाभिधानादेवचॐ
॥ ॥ विशिष्टसुखवत्त्वाच्चब्रह्मत्वंचविशिष्टता॥ ॥ॐअनवस्थितेरसंभवाच्चनेतरःॐ॥ ॥ अन्योन्यनियतिश्चे
शनियमेनान्यथाभवेत् ॥ चेतनानांविशेषोयःस्वभावोपीश्वरार्पितः॥ अन्योन्यनियमेतस्मादनवस्थित्यसंभ
वौ ॥ईश्वरश्चेन्नियंतास्यात्सएवप्रथमागतः॥ किमित्यपोद्यतेकस्माद्वृथाऽवस्थितिकल्पना।दोषवत्येवतस्मात्सा
नैवकार्याकथंचन ॥४॥ ॥ॐअंतर्याम्यधिदैवादिषुतद्धर्मव्यपदेशात्ॐ॥ ॥रमणंनातियत्नस्यविक्षेपादेव
युज्यते॥इतिचेत्सर्वनियमोयस्यकस्मान्नशक्यते॥ स्वात्मनाऽनियतंवस्तुप्रतीपंह्यात्मनोभवेत्॥ स्वाधीनसत्ता
शक्त्यादिकथमात्मप्रतीपकं॥५॥ ॥ॐअदृश्यत्वादिगुणकोधर्मोक्तेःॐ॥ ॥गुणक्रियादयोभावायदिवा
स्युरभेदिनः॥ अभेदोभावधर्माणांब्रह्मणायुज्यतेकथं॥ नाभावोभावइतिचविशेषःप्रायशोभवेत्॥अतद्भावो
न्यताचेतिनविशेषोस्तिकश्चन॥ दोषाभावोगुणइतिप्रसिद्धोलौकिकेष्वपि॥अदृश्यत्वादिकांस्तस्माद्गुणानाह
स्वयंप्रभुः॥भावाभावविरोधोपिनतुसर्वत्रविद्यते॥तदभावोहितद्भावविरोधीनततोपरः॥पृथक्त्वाभावतद्रूपा
न्भेदांस्त्रीन्कल्पयंतिचेत्॥ कल्पनागौरवाद्यास्तुदोषास्तत्रविरोधिनः॥पृथक्त्वान्यत्वभेदास्तुपर्यायेणैवलौकि

कैः॥व्यवह्रियंतेसततंवैदिकैरपिसर्वशः ॥ दृष्टहानिरदृष्टस्यकल्पनेत्येवदूषणं॥ यदातदधिकोदोषोविद्यतेको
नुवादिनां॥ भावाभावस्वरूपास्तुविशेषाएववस्तुनः॥ अभिन्नाएवसंग्राह्याव्यवहारप्रसिद्धये॥ यथैकस्समवा
योपिभेदाभेदौचवस्तुनि ॥ अंगीकार्याविशेषेणस्थानेषुव्यवहर्तृभिः ॥ अखंडवादिनोपिस्याद्विशेषोनिच्छतो
प्यसौ॥व्यावृत्तेनिर्विशेषेतुकिंव्यावर्त्यबहुत्वतः॥६॥ ॥ ॐवैश्वानरस्साधारणशब्दविशेषात्ॐ॥ ॥बहुलिं
गसमायुक्तैर्बहुभीरूढनामभिः॥प्रसिद्धैरन्यगत्वेनवाच्यस्साक्षाज्जनार्दनः॥वैश्वानरादयःशब्दाअपितद्वाचि
नस्ततः॥ ॥ॐशब्दादिभ्योतःप्रतिष्ठानान्नेतिचेन्नतथादृष्ट्युपदेशादसंभवात्पुरुषविधमपिचैनमधीयतेॐ ॥
तानिलिंगानितेशब्दाअपितद्वाहिसर्वशः॥ बहुलाप्यज्ञरूढिस्तत्प्राज्ञरूढिंनबाधते॥७॥इतिश्रीमदानंदती
र्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेप्रथमाध्यायस्यद्वितीयःपादः॥ १ ॥ २ ॥ ॥
॥ॐ॥ तत्रान्यत्रप्रसिद्धानांलिंगनाम्नांपुनर्हरिः। विशेषान्मुख्यतोवृत्तिंस्वस्मिन्नेवात्रवक्त्यजः॥ ॥ ॐना
नुमानमतच्छब्दात्ॐ॥ ॥ विष्णावेवात्मशब्दस्यरूढत्वान्नशिवादिकान्॥श्रुतिर्वक्ति॥१॥ ॥ॐभूमासंप्र
सादादध्युपदेशात्ॐ॥ ॥ अखिलेशत्वाद्भूमाविष्णुःसुखाधिकः॥२॥ ॥ॐअन्यभावव्यावृत्तेश्चॐ॥ ॥

अतोविरुद्धवद्भातमपिव्याख्यायतत्त्वतः ॥ योजनीयंहरौवाक्यंविरुद्धैर्लक्षणैर्युतं ॥ब्रह्मैवतानिलिंगानितदन्य
त्रत्वसंत्यपि ॥ अविरोधेनगोविंदेसंत्यस्थूलादिकानिच ॥ अन्यवस्तुस्वभावानांस्थौल्यादीनामपाकृतिं ॥ ना
रायणेश्रुतिर्वक्तिनतुतस्यास्वभावतां ॥ सर्वधर्मासर्वनामासर्वकर्मागुणाःश्रुताः॥ दोषाःश्रुताश्चनेत्याद्याप्रमा
णंश्रुतिरत्रच ॥ ३ ॥ लिंगंसाधारणंशब्दौस्थानंलिंगमनुग्रहः ॥ पुनश्शब्दालिंगशब्दौविचार्याद्धिस्थिताइह ॥
बाहुल्यंलिंगशब्दानामनुक्तिश्चविरुद्धता ॥ अदृष्टिरन्वयाभावोविपरीतश्रुतिभ्रमः॥लिंगावकाशराहित्यभ्रम
स्तादृग्द्वयंतथा॥बहुतादृक्त्वमुक्तस्यविरोधोर्थात्तथागतिः॥समस्तमेतदित्यत्रपूर्वपक्षेषुयुक्तयः॥ ताएवबलव
त्यस्तुगत्यंतरविवर्जिताः॥सिद्धांतयुक्तयोज्ञेयादृश्यंतेताश्चसर्वशः॥ मुक्तोपसृप्यताप्राणादाधिक्यंसर्वतस्तथा
॥ वैलक्षण्यंस्वभावस्यप्रेक्षापूर्वक्रियातथा ॥ अरस्यण्यस्यचेशत्वंसूर्याद्यनुकृतिस्तथा ॥ वामनाख्यासर्वकंपस्त
च्छब्दानन्यसिद्धता ॥ अनामरूपताभेदस्योपजीव्यप्रमाणता॥सर्वैश्वर्यादिकाद्यास्तावेदेशेनप्रदर्शिताः ॥अ
धिकारश्चतद्धानिःप्रसंगादेवचिंतितौ ॥ ७॥ ॥ ॐभावंतुबादरायणोस्तिहिॐ ॥ ॥तत्फलायविधिःसिद्धेचो
पासायानिराकृतः॥यतोजैमिनिनान्यार्थमसिद्धेर्थेविधिस्तथा॥ विद्याधिराजस्यमतमविरोधस्तयोस्ततः॥मो

क्षेफलविशेषोस्तिनचसर्वंप्रकाशते॥सर्वदातेनदेवानामपियुक्ताह्युपासना॥ नित्यंवृद्धिक्षयापेतंविष्णोःपूर्णंतु
वेदनं॥ स्पष्टातिस्पष्टविशदंब्रह्मणोशेषवस्तुगं॥ अन्येषांक्रमशोज्ञानंमितवस्तुगतंसदा॥ इत्यादयोविशेषास्तु
सदाविद्यापतेर्हृदि॥ जैमिन्याद्यास्तुसामान्यवेत्तृत्वात्तत्तथावदन्॥ विद्येशमतमेतस्मान्नैवसद्भिर्विरुध्यते॥८॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेप्रथमाध्यायस्यतृतीयःपादः॥१।३॥
॥॥ ॐतदधीनत्वादर्थवत्ॐ॥॥ दुःखिबद्धावराद्यास्तुतदधीनत्वहेतुतः॥ शब्दाब्रह्मणिवर्तंतेराज्ञियद्वत्परा
जयः॥ स्वातंत्र्यंतद्गतत्वंचशब्दवृत्तेर्हिकारणं॥ स्वातंत्र्यंतत्रमुख्यंस्यात्कुतोराज्ञिजयोन्यथा॥ नहिभृत्यस्यवि
जयिशब्दस्तावत्प्रयुज्यते॥ यावद्राज्ञ्यन्यगत्वेपिस्वातंत्र्याभासमात्रतः॥ भृत्यबंधादिकंराज्ञिराज्ञोबंधादियो
ग्यतः॥ कारणंसंशयस्यस्यादितिनैवप्रयुज्यते॥ अमंगलत्वाच्छब्दानांराज्ञोयोगादमंगले॥ अप्रियत्वात्तुश
ब्दस्यस्यात्प्रयोगनिवर्तनं॥ गुणास्तुतादृशायत्रप्रयुज्यंतेखिलाअपि॥ पूज्येष्वेवविशेषेणस्वातंत्र्यंमुख्यकार
णं॥ अतोदोषातिदूरत्वात्संशयस्याप्यसंभवात्॥ दोषाणांविष्णुगत्वस्यप्राज्ञबुद्धिव्यपेक्षया॥ स्वातंत्र्यार्थम
भिप्रेत्यदोषशब्दाश्चविष्णवि॥ वासुदेवश्रुतिश्चाहनैवविष्णावमंगलं॥ मंगलामंगलेन्यत्रततोनामंगलंवदेत्॥

स्वातंत्र्यापेक्षयाविष्णौदोषोनामंगलोक्तितः॥ बहुभुक्त्वंयथादोषोनृषुनैवहरौक्वचित् ॥ एवंदुःख्यादिशब्दा
श्चस्वातंत्र्यापेक्षयोदिताः॥ नैवदोषाहरौतद्वद्बुध्योक्तादोषकारिणः॥ तस्मात्तेदोषशब्दाश्चतत्रैवगुणवाचकाः
॥१॥ ॥ ॐज्योतिरुपक्रमात्तुतथाह्यधीयतएकेॐ ॥ ॥ जातमोतंहरौयस्माज्ज्योतिःषःप्राणरूपतः ॥ आय
जेतश्चायजेतोवसंतिश्चवसंस्ततः ॥ विगतच्छादनत्वात्तुगच्छभूतक्षयंकरः॥ भुंक्ष्वेत्युक्तोहरिर्हुंचहुतमस्मिन्
जगद्यतः ॥ स्फुटत्वात्फडितिप्रोक्तःकवरक्षणइत्यतः ॥ कवचंवर्ततेयस्मात्षड्गुणत्वेनसर्वदा ॥ वषट्तद्गत्व
तस्तेषांवौषडित्येवकथ्यते ॥ स्वीयंस्वीकुरुतेयस्मात्स्वाहेत्युक्तोजनार्दनः ॥ नमंत्यस्मिन्गुणायस्मान्नमइत्ये
वकथ्यते ॥ इत्यशेषक्रियानामशब्दैरेकोजनार्दनः ॥ उच्यतेमुख्यतोयस्मात्पदवर्णस्वरात्मभिः ॥ तस्मादनं
तगुणताश्रुतितात्पर्यतोस्यहि ॥ विज्ञानार्थत्वतःसर्वशब्दानांनास्तिदूषणं ॥ अंगीकृतेपिनैवास्तिदोषोवाक्य
समन्वये ॥ तदर्थत्वेनकर्मादेःसंभवादल्पबुद्धये ॥ कश्छंदसांयोगमितिश्रुतेर्योगार्थतत्त्ववित् ॥ ब्रह्मैकोनैव
चान्योस्तिकइत्यस्योभयार्थतः॥ तस्यापिपूर्वसिद्धस्यज्ञानमेवेतिनिश्चयात् ॥ नित्ययोगोपिशब्दानामर्थैर्नैव ॥१७३॥
निषिध्यते ॥२॥ ॥ ॐप्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधात्ॐ ॥ ॥ एतेनसर्वेव्याख्याताव्याख्याताःॐ॥ स्त्री

न्य

शब्दाश्चनिषेधार्थाःसर्वेपिब्रह्मवाचकाः ॥६॥७॥ विरोधिसर्वबाहुल्यकारणस्त्रीनिषेधिनां ॥ पृथक्समन्वया
र्थानिस्थानान्येतानिसर्वशः ॥ सर्वमानैर्विरोधश्चव्युत्पत्तेरप्यशक्यता ॥ परस्परविरोधश्चविरोधःकार्यतद्ग
तोः ॥ स्त्रीलिंगत्वंनिषेधश्चपूर्वपक्षेषुयुक्तयः॥ दोषात्यस्पृष्टिनियमःशब्दार्थानेकतातथा ॥ बहुरूपत्वमीशस्य
त्वक्त्यव्यक्तिविशेषिता ॥ उत्पादनंस्वदेहाच्चदुर्जनाव्यक्ततातथा ॥ इत्यादियुक्तयःसाक्षात्सिद्धांतस्थापिकाइ
ह ॥४॥ ॥ ॐसमाकर्षात्ॐ ॥ ॥ अन्वयःसर्वशब्दानामशक्योज्ञातुमंजसा ॥ इतियल्लोकवैमुख्यंजैमिन्यादि
मतंवदन् ॥ विद्याधिनाथोभगवानपाचक्रेस्वयंप्रभुः॥स्वशिष्याणांप्रसिद्ध्यर्थंमतमात्मीयमंशतः॥ विज्ञातंतैर्ज
गादात्रतारतम्यंनृणांवदन् ॥५॥ ॥ ॐकल्पनोपदेशाच्चमध्वादिवदविरोधःॐ॥ ॥ तेषुतेषुपदार्थेषुरूढिरंगी
कृतायतः ॥ प्रयोजनबहुत्वेनतस्यतस्याविरोधतः॥उपदेशादिसामर्थ्याद्विष्णौशक्तिश्चगृह्यते ॥ तथाप्येतद्वि
रोधेतुतद्वाचित्वमपोद्यते ॥ अविरोधेतुबह्वर्थाएतन्मूलतयामताः॥ इतोहिरूढतान्येषामुपजीव्यत्वमत्रहि ॥
तत्सिद्धिस्तदपेक्षाचसापेक्षाचहरीच्छया ॥ तस्मात्परममुख्यत्वंविष्णावन्यत्रमुख्यता ॥ उपलक्षणाचगौणीच
तिस्रःशब्दस्यवृत्तयः॥ प्रवृत्तिहेतोर्बाहुल्यंज्ञेयंपरममुख्यता ॥ तत्रप्रयोगबाहुल्यंयदितत्परताकिमु ॥ उभयंद्व

अनु ॥ १४ ॥

श्यतेविष्णौशब्दानामपिसर्वशः॥ प्रयोगमात्रबाहुल्यंरूढिरित्यभिधीयते ॥ प्रयोगयुक्तसादृश्यंसंबंधोवाप्यमु
ख्यतः॥ वृत्तिहेतुरितिज्ञेयःपूर्वायोगेपरग्रहः॥एतमेवतथासंतंशतर्चीत्यादिनामभिः ॥ आचक्षतइतिह्यत्रसंत
मित्यवधारणात् ॥ योगस्यरूढेःप्राबल्यंविद्धद्रूढिंचतत्रगां ॥ बहुशोदर्शयत्यंजस्तात्पर्यात्सनिरुक्तिकं ॥ अइ
तिब्रह्मकथितंतद्व्याख्यानात्मतातथा॥ शब्दानामपिसर्वेषांनामवित्कृतकृत्यता ॥ विष्णुनामार्थरूपत्वंसंहिता
देरथाब्रवीत् ॥ णकारंचषकारंचबलचेष्टात्मकंवदन् ॥ तज्ज्ञानपूर्वकत्वेनसंहिताध्ययनंतथा ॥ उपसर्गत्वतोवे
स्तुताच्छील्यार्थादुनस्तथा॥णकारश्चषकारश्चनामरूपतयामतौ॥तस्मात्समन्वयोविष्णौस्वरवर्णपदात्मनः॥
अपिवेदस्यकिमुतवाक्यरूपेणसंगतिः ॥ घोषाःसर्वेपिवेदाश्चसर्वेवेदाश्चयत्पदं ॥ इंद्रंमित्रंयमिंद्रंचप्रथमःसंक्र
तिस्तथा ॥ नामधाःसर्वदेवानामेकइत्यादिकाश्रुतिः॥ प्रमाणमुक्तविषयेतदेवोक्तमुपक्रमात् ॥ इतिस्वयंभगव
ताब्रुवताऽशेषमन्वयं ॥२॥ नशब्दवाच्यतैवात्रप्रधानस्यनिषिध्यते ॥ सर्ववेदेतिहासेषुपुराणेषुचसंग्रहात् ॥ स
त्वंरजस्तमइतिगुणाःप्रकृतिसंभवाः ॥ निबध्नंतिमहाबाहोदेहेदेहिनमव्ययं ॥ इत्यादिवाक्यरूपेणयत्रार्थोना ॥१७४॥
न्यइष्यते ॥ तेजोबन्नात्मकंवापियद्युपादानमिष्यते ॥ अनाद्येवापराधःकःप्रधानमितिचोदिते ॥ अजामेका

व्याख्या. १ । ४

मितिप्राहश्रुतिरेतांयदातदा ॥ कोदोषःसर्वथैवास्तिपरिणामिजडंयदि ॥ अस्माकंपरमुख्यार्थोभगवानेकएव
तु ॥ मुख्यमात्रतयारूढंसर्वमभ्युपगम्यते ॥ सर्वेषामपिशब्दानांगौणाद्यंतदयोगतः ॥ अर्थद्वयमभिप्रेत्यप्रवृत्ते
हरिरुक्तवान् ॥ कार्याणांकारणंपूर्वंवचसांवाच्यमुत्तमं ॥ योगानांपरमांसिद्धिंपरमंतेपदंविदुः॥इतिबुद्धौसमा
रोहादुभयोर्योगरूढयोः॥ त्यागेचकारणाभावादुभयार्थत्वमिष्यते ॥ विपरीतप्रमाभावेपूर्वारोहस्तुकारणं ॥
साभवेद्यत्रसव्यर्थःपूर्वारोहोभ्रमोयथा ॥ अतोजगदुपादानंप्रधानंवक्तिसाश्रुतिः॥१॥ यत्तत्रिगुणमव्यक्तंनित्यं
सदसदात्मकं ॥ प्रधानंप्रकृतिंप्राहुरविशेषंविशेषवत् ॥ पंचभिःपंचभिर्ब्रह्मचतुर्भिर्दशभिस्तथा ॥ एतच्चतुर्विंश
तिकंगणंप्राधानिकंविदुः॥इतिभागवतेप्राहविद्याधीशःस्वयंप्रभुः॥२॥नचप्रकृतिशब्देनब्रह्मोपादानमुच्यते ॥
अविकारःसदाशुद्धोनित्यआत्मासदाहरिः॥ सदैकरूपविज्ञानबलआनंदरूपकः॥निर्विकारोक्षरःशुद्धोनिरा
तंकोजरोमरः॥ अविश्वोविश्वकर्ताजोयःपरःसोभिधीयते ॥ निर्विकारमनौपम्यंसदैकरसमक्षयं ॥ ब्रह्मेतिप
रमात्मेतियंविदुर्वैदिकाजनाः ॥ इतिश्रुतिपुराणोक्त्यानविकारीजनार्दनः ॥ पराधीनविशेषाप्तिरनिवर्त्योन्य
थाभवः॥ क्षीरादिवद्विकारःस्यान्नैवसस्याद्धरेःक्वचित् ॥ अपादानत्वमेवास्ययद्युपादानतेष्यते ॥ अंगीकृतंत

अनु त्पितृवन्नतुविश्वात्मनाभवः ॥ नचोर्णनाभिजनितृमातृणांचविकारिता ॥ चेतनत्वात्तदन्नंहिकार्यरूपतयाभवे व्याख्या·
॥१५॥ त्॥अपादानतयाविश्वकर्तृत्वंबुद्धिपूर्वकं ॥ उक्तंभाल्लविशाखायांब्रह्मतर्केचसादरं ॥ इच्छामात्रात्प्रभोःसृष्टिर १।४
विकारस्यसर्वदा ॥ स्वभावोयंमनंतस्यरजोयेनाभवज्जगत् ॥ स्वदेहादिच्छयाविश्वंभुक्तपूर्वंजनार्दनः ॥ सस
र्जेमातापितृवदूर्णनाभिवदेववा ॥ प्रधानंपरिणाम्येशोनिर्विकारःस्वयंसदा ॥ नचेतनविकारःस्याद्यत्रक्वापि
ह्यचेतनं॥ नाचेतनविकारोपिचेतनः स्यात्कदाचन ॥ नचान्यस्यान्यरूपत्वंविकृतत्वेपिदृश्यते ॥ नक्षीराद
न्यथादध्नःकेनचिद्दृश्यतेक्वचित् ॥ सर्वज्ञाद्ब्रह्मणोन्यत्वंजगतोह्यनुभूयते ॥ अभेदःसत्त्वमात्रेणस्यात्खर्वस्वर्णयो
रपि ॥ भागेनपरिणामश्चेद्भागयोर्भेदएवहि ॥ योभागोनविकारीस्यात्सएवास्माकमीश्वरः॥ भिन्नानांसमुदा
यस्यनामब्रह्मेतिचेद्भवेत् ॥ ब्रह्मोपादानतानस्यात्तदाविश्वस्यहिक्वचित् ॥ शृंगाच्छरोविलोमभ्योदूर्वागोमयत
स्तथा ॥ वृश्चिकश्चेत्येवमाद्येष्वपादानत्वमिष्यते ॥ उपादानैकदेशत्वंयद्यप्यत्रप्रदृश्यते॥अप्यपादानतैवात्रदृ
ष्टांतोब्रह्मणोभवेत् ॥ नह्युपादानतैवात्रबाह्यावयवगौरवात् ॥ नचाचेतनतस्तत्रचेतनस्यसमुद्भवः ॥ उपादा ॥१७५॥
नतयाकिंतर्ह्यपादानंह्यचेतनं ॥ कार्यदेहगतस्यास्यचेतनस्यप्रदृश्यते ॥ सच्चत्यच्चाभवदितिनास्यविश्वत्वमु

च्यते ॥ तत्सृष्टेतिगिरैवास्यपूर्वंविश्वस्यसिद्धितः ॥ सत्त्वात्ततेर्वैदिकत्वात्सम्यग्वक्तुमशक्यतः ॥ आश्रयत्वा
त्स्वाश्रयत्वाज्ज्ञानत्वाद्दुर्विदत्वतः ॥ सत्ततेर्यातनाच्चैवह्यप्राप्यत्वाच्चदुर्जनैः ॥ नित्यसाधुगुणव्याप्तियंतृरूपत्वतः
सदा ॥ जगद्गतेनरूपेणब्रह्मैवहितथोच्यते ॥ व्यक्तिरुक्तगुणानांहिपुरुषापेक्षयानृणां ॥ भवेदभवदित्याद्यः प्र(त्य
स्मात्प्र)योगश्चात्रयुज्यते ॥ तस्मादशेषकर्तैकोनिर्विकारोरमापतिः शब्दैः प्रकृतिरित्याद्यैः स्त्रीलिंगैरभिधीयते ॥
बहुस्यामितितस्यैवह्युक्तमार्गेणयुज्यते ॥ तत्तद्गतेनरूपेणतदर्थंह्यसृजज्जगत् ॥ यच्चाविकृतमेवैकंब्रह्मविश्वात्मना
मृषा ॥ दृश्यतेमंददृष्ट्यैवससर्गइतिकथ्यते ॥ सामंददृष्टिस्तस्यैवब्रह्मणः किंततोन्यगा ॥ ब्रह्मणश्चेत्क्वसार्वज्ञमन्य
गाचेत्स्वतोन्यता ॥ नादेह्योगिनोदृष्टिरितितत्कारणंस्वतः ॥ देहिनः कारणयुतादेहाश्रयदिनभ्रमात् ॥ किं
भ्रांतिकल्पितंतत्रभेदोपिभ्रमजोयदि ॥ भ्रांतेरज्ञानमूलत्वात्तस्यभेदव्यपेक्षया ॥ नाज्ञानकल्पकंकिंचिदन्योन्या
श्रयतायतः ॥ भ्रमत्वेत्वियमुक्तिश्चतदंतःपतनान्नहि ॥ व्यावहारिकताचास्यस्यादबाध्यत्वएवहि ॥ बाध्यंना
र्थक्रियाकारिनचस्वप्नोपिनोमृषा ॥ वासनाजनितत्वेनतस्याप्यंगीकृतत्वतः ॥ सहिकर्तेतिवाक्याच्चजाग्रत्त्व
मितिहिभ्रमः ॥ सर्पभ्रमादावपिहिज्ञानमस्त्येवतादृशं ॥ तदेवार्थक्रियाकारितत्सदेवार्थकारकं ॥ ब्रह्मत्वर्थक्रि

याकारिपरतःस्वतएववा ॥ अंगीकृतंहितेनैवपरतस्त्वेनचप्रमा ॥ अमुख्यसत्यमानस्यसाधकत्वेसदावयोः ॥
नहिसंप्रतिपत्तिःस्यादतस्तिष्ठतुसाप्रमा ॥नहिविप्रतिपन्नेनशक्यंसाधयितुंक्वचित् ॥ साधकत्वंतुसत्यस्यसाक्षि
णोह्यावयोर्द्वयोः ॥ सम्यक्संप्रतिपन्नंतन्नविवर्तमतंभवेत् ॥ यदिनांगीकृतंकिंचिदनंगीकृततापिहि ॥ नांगीकृ
तेतिमूकःस्यादितिनास्मद्विवादिता ॥ विश्वंसत्यंयच्चिकेतप्रघान्वस्ययथार्थतः ॥ इत्यादिश्रुतयःसर्वाविश्वस
त्यत्ववाचिकाः ॥ सत्यत्वंगगनादेश्चसाक्षिप्रत्यक्षसाधितं ॥ साक्षिसिद्धस्यनक्वापिबाध्यत्वंतददोषतः ॥ सर्व
कालेष्वबाध्यत्वंसाक्षिणैवप्रतीयते ॥ कालोहिसाक्षिप्रत्यक्षःसुषुप्तौचप्रतीतितः ॥ अतीतानागतौकालावपि
नासाक्षिगोचरौ ॥ पक्षीकर्तुमशक्यत्वान्नानुमातत्रवर्तते ॥ तदेतदितिसर्वंचदृश्यंवास्मृतिगोचरं ॥ साक्षिसि
द्धेनकालेनखचितंह्येववर्तते ॥ तस्मान्नतंविनाकिंचित्स्मर्तुंद्रष्टुमथापिवा ॥ शक्यंतन्नित्यसिद्धेर्हिनानुमावस
रोभवेत् ॥ अतोदोषप्रतीतस्यसत्यत्वंसाक्षिणामतं ॥ परीक्षादेश्चसत्यत्वंतेनह्येवमतंभवेत् ॥ अन्यथाश्रुति
युक्त्यादिप्रमाणैश्चसहैवतु ॥ अकस्माद्विनिवृत्तिश्चकिंविश्वस्यनशंक्यते ॥ इतःपूर्वंतथाभावाद्यदिनोसंसृ
तेर्गतिः ॥ वाक्यानुमादितश्चेत्स्यात्तत्प्रामाण्यंचसाक्षितः ॥ तत्प्रामाण्यंयथासाक्षीस्थापयत्येवमेवहि ॥ सर्वका

लेष्वपिस्थैर्याद्यभिचारमपोह्यच ॥ एवमक्षजमानत्वसिद्धांविश्वस्यसत्यतां ॥ किमितिस्थापयेन्नायंनिर्दोषज्ञा
नशक्तितः ॥ एकाज्ञानकृतंविश्वमितियच्चोच्यतेमृषा ॥ बहुज्ञानकृतंविश्वमितितस्योत्तरंभवेत् ॥ परस्यसत्य
तांजानन्नपियःस्वात्मतस्करः ॥ परोनास्तीतिवदतिकिमित्युन्मत्तवद्वदेत् ॥ पराभावेपिवाग्व्यर्थायदिनैवोच्य
तेतदा ॥ कशावेत्रादिकंतस्यतस्करस्योत्तरंवदेत् ॥ प्रपंचोयदिविद्येतनिवर्तेतनसंशयः ॥ मायामात्रमिदंद्वै
तमद्वैतंपरमार्थतः ॥ विकल्पोविनिवर्तेतकल्पितोयदिकेनचित् ॥ उपदेशादयंवादोज्ञातेद्वैतंनविद्यते ॥ इत्य
त्रयदिशब्दौचनिवर्तेतेतिचद्वयं ॥ विश्वस्यसत्यतामाहुर्विद्येतोत्पत्तिमेवच ॥ विदोत्पत्तावितिह्यस्माद्धातोरु
त्पत्तिरेवहि ॥ निवृत्तिव्याप्तियुक्प्रायःप्रपंचोभेदपंचकः ॥ जीवेश्वरभिदाचैवजडेश्वरभिदातथा ॥ जीवभेदो
मिथश्चैवजडजीवभिदातथा ॥ मिथश्चजडभेदोयंप्रपंचोभेदपंचकः ॥ सोयंसत्योह्यनादिश्चसादिश्चेन्नाशमाप्नु
यात् ॥ द्वैतंनविद्यतइतितस्मादज्ञानिनांमतं ॥ इतिश्रुतेर्मितंत्रातंमायाख्यहरिविद्यया ॥ उत्तमोर्थोहरिस्त्वेकः
तदन्यन्मध्यमाधमं ॥ वाचारब्धंतुसांकेत्यनामस्याद्विकृतंबहु ॥ नित्यंतुनामधेयंयन्मृत्तिकेत्यादिवैदिकं ॥ प्राधा
न्यात्तत्परिज्ञानात्प्राकृतोज्ञोपिपूरुषः ॥ विद्वानित्युच्यतेसद्भिरेवंनित्यपरात्मवित् ॥ सदातनंसत्यमितिनित्य

मेवोच्यतेबुधैः ॥ प्रयोगश्चोत्तरत्रास्तिजरायद्येनमाप्नुयात् ॥देहःप्रध्वंसतेचायंकिंततोस्यातिशिष्यते॥हन्यते
नवधेनायंजरयाचनजीर्यते॥ एतत्सत्यंब्रह्मपुरमितिनित्यत्वएवहि ॥वाचारंभणमित्युक्तेमिथ्येत्यश्रुतकल्पनं
॥ पुनरुक्तिर्नामधेयमितीत्यस्यनिरर्थता ॥ एकःपिंडोमणिश्चेतिपदवैयर्थ्यमेवच॥विकारित्वविवक्षायांनचैक
नखकृंतनं ॥ सर्वंकार्ष्णायसंचस्यादतःसादृश्यएवच ॥ विवक्षात्रतुनित्यत्वेप्राधान्येचोक्तवर्त्मना ॥ प्राधान्यप्र
तिपत्त्यर्थःसृष्ट्यादेश्चैषविस्तरः॥तस्मात्केनापिमार्गेणनविवर्तमतंभवेत्॥तदसंख्यातदोषेतंहेयमेवशुभार्थिभिः
॥ असंख्यत्वेनदोषाणांग्रंथाधिक्यभयादपि ॥ उपरम्यतेततोविष्णुरिच्छापूर्वकमश्रमः ॥ करोतिपितृवद्विश्वं
पूर्णाशेषगुणात्मकः ॥ ६ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेप्रथमा
ध्यायस्यचतुर्थपादः ॥ अध्यायश्चसंपूर्णः ॥ १ ॥ ४ ॥ ॥ ॥ ॥ ॥
श्रीगुरुभ्योनमः ॥ हरिःॐ ॥ ॥उक्तःसमन्वयःसाक्षादविरोधोत्रसाध्यते ॥ चतुर्विधस्यतस्यादौयौक्तस्तत्रापि
चस्मृतेः ॥ तस्याश्चतुस्स्वरूपत्वात्प्रत्येकंचतुरात्मकाः॥पादाःसर्वेतदंशाश्चमूर्तीनांवर्णमागमात् ॥ आप्ततास
ताऽदृष्टिश्रुतिसाम्यबलोद्भवाः॥सर्वानुसारोलघुताविशेषादर्शनाफले।इष्टासिद्धिश्चनियमःपूर्वपक्षेषुयुक्तयः

॥ एताएवत्वतिबलाःसिद्धांतस्यनियामिकाः ॥ ॥ ॐस्मृत्यनवकाशदोषप्रसंगइतिचेन्नान्यस्मृत्यनवकाश
दोषप्रसंगात्ॐ॥ ॥ आप्तैःप्रत्यक्षतोदृष्ट्वाप्रोक्तमर्थंकथंश्रुतिः॥ पिपीलिकालिपिनिभावारयेत्सर्वगाहिते ॥
इतिचेद्यद्यशेषज्ञारुद्राद्याहरिपूर्वकाः॥ किंनाशेषविदोमानंह्युभयत्रसमंभवेत् ॥नचास्तिनिश्चयस्तत्रशक्यतेव्य
भिचारतः॥ नचास्याव्यभिचारेपिहीयतेमानताक्वचित्॥ निर्दोषवाक्यमूलत्वान्नचतद्युक्तिमूलता॥ वेदोक्त
स्याधिकारस्यदुर्निरूपत्वतःसदा ॥ नियमोव्यभिचारोवानैवज्ञातुंहिशक्यते॥ अधिकारोहिसुलभःकथितो
न्यागमेष्वलं॥वेदोक्तोह्यधिकारस्तुदुर्लभस्सर्वमानुषैः॥अन्यागमेषुविप्रत्वमपिचंडालजन्मनां॥ मंडलांतःप्रवे
शेनक्रमशःप्रतिपाद्यते॥ अधिकारंदुरापाद्यमुक्त्वातिसुलभंपुनः ॥ अशक्यंसाधनंचोक्त्वासुशकंतत्फलाप्तये
॥उच्यतेतस्तदुक्तंहिव्यभिचारिफलेपितु॥ कथंप्रमाणतांगच्छेत्॥ १॥ ॥ ॐनविलक्षणत्वादस्यतथात्वंचश
ब्दात्ॐ॥ ॥ नित्यत्वात्पुरुषोद्भवैः॥ उज्झितंसर्वदोषैश्चकथंनोमानतांव्रजेत्॥ विरूपनित्ययावाचानित्यया
ऽनित्ययासदा॥ इत्यादिश्रुतिभिर्भेदोनित्यइत्येवगम्यते॥ पिपीलिकालिपिश्चापिप्रमाणमविरोधतः॥ यथा
द्रौणेरुलूकेनकृतमप्यासबोधकं॥ अविरुद्धंविरुद्धंतुविरोधादेवबाधितं॥विरोधादर्शनात्तस्माद्वेदप्रामाण्यमि

अनु ष्यते ॥ तन्मूलत्वात्स्मृतीनांतुविरोधोयत्रनक्वचित्॥विरोधोपिसएवोक्तः प्रत्यक्षेणागमेनवा ॥ आगमेनागम व्याख्या.
॥ १८ ॥ स्यैवविरोधेयुक्तिरिष्यते॥उपजीव्यविरोधेतुवेदस्यान्यार्थकल्पना॥ प्रत्यक्षमुपजीव्यंस्यात्प्रायोयुक्तिरपिक्वचित् २। १
॥आगमैकप्रमाणेषुतस्यैवह्युपजीव्यता॥युक्तोयुक्तश्चयद्यर्थआगमस्यप्रतीयते ॥ स्यात्तत्रयुक्तएवार्थोयुक्तिश्च
त्रिविधामता॥व्याप्तिःप्रत्यक्षगायस्यायुक्तिगाऽऽगमगातथा ॥ प्रत्यक्षागममूलातुयुक्तिस्तत्रबलीयसी। याथा
र्थ्यमेवमानत्वंतन्मुख्यंज्ञानशब्दयोः॥अर्थत्वमर्यतैवस्यान्नक्रियार्थेषुसामता ॥ ज्ञानार्थेज्ञेयतामुख्याशब्दार्थेत
दनंतरं॥यथार्थज्ञानजनकायथार्थायुक्तयःस्मृताः॥अनुप्रमाणमेतानिह्यक्षयुक्तिवचांस्यतः॥ प्रामाण्यंनानुवा
दस्यस्मृतेरपिविहीयते॥याथार्थ्यमेवप्रामाण्यशब्दार्थोयद्विवक्षितः। अंगीकृतंचेत्प्रामाण्यंस्मृत्यादेःकाविरुद्ध
ता॥नचाफलत्वंवक्तव्यंसर्वस्मृत्यनुवादयोः॥फलवत्त्वंनचास्माभिःप्रामाण्यंहिविवक्षितं ॥तृणादिदर्शनेकिंच
फलवत्त्वंनिगद्यते॥सुखदुःखादिकंकिंचित्स्मृतावपिहिदृश्यते॥ नपरिच्छेदकार्येवप्रमाणमितिचप्रमा ॥ निर्दो
षाक्षोद्भवंह्यत्रप्रत्यक्षमितिगीयते॥प्राकृतंशुद्धचैतन्यमक्षंतुद्विविधंमतं।शुद्धमीशरमामुक्तेष्वन्यत्रप्राकृतैर्युतं। ॥१७८॥
निर्दोषमेवचैतन्यमन्यत्रोभयमिष्यते।सुखदुःखादिविषयंशुद्धंसंसारगेष्वपि॥ निर्दोषत्वातिनियमात्तद्बलिष्ठत

मंमतं ॥ पंचेंद्रियमनोभेदात्प्राक्तृतंषड्विधंस्मृतं॥ अनुमायुक्तिरेवोक्ताव्याप्तिरेवतुसास्मृता॥प्रतिज्ञातार्थसिध्य
र्थंव्याप्तिरेवयदोदिता ॥ अवशिष्टंकिमत्रास्तिलिंगंतत्रविजानतः॥ यदिलिंगमसिद्धंस्यात्कुतएवास्यमानता
॥ यदिस्मारकमात्रंस्यात्स्मर्तुर्नात्रप्रयोजनं॥नपंचावयवोक्तौचविवादावसितिर्भवेत्॥दृष्टांतादिषुचैवंस्यात्सा
धनंपुनरेवतु ॥ लिंगोक्तावपिचैवंस्यादनुमावसितिर्ध्रुवा ॥ विरोधोसंगतिश्चैवसाक्षाद्युक्तेस्तुदूषणं॥प्रतिज्ञाया
मसंबंधोयुक्तेरुक्ताह्यसंगतिः ॥ विरोधोपित्रिधैवस्यात्प्रतिज्ञार्थविरुद्धता॥लिंगराहित्यमव्याप्तिर्न्यूनाधिक्येतु
वाचिके॥साध्यव्यापकवैलोम्यमव्याप्तिस्साधनस्यच॥दुर्बलेनविरोधेपिनप्रमाणमसाधकं॥ स्ववाक्येनविरोधे
पिनैवसाधकतांव्रजेत्॥संवादानुक्तिसंयुक्ताएतएवतुनिग्रहाः॥वादोजल्पोवितंडेतिकथास्तिस्रोविजानतां ॥
स्वार्थंपरार्थमपिवातत्त्वनिर्णयसाधिनी॥केवलंतुकथावादोजल्पोर्थादिव्यपेक्षया ॥ सतामेवकथाज्ञेयावितंडा
त्वसतांसतां॥अप्रकाश्यस्वसिद्धांतमसतांपक्षदूषणं॥ उक्तेतैःप्रथमंमानेवक्तव्यंतस्यदूषणं ॥ विद्यापरिक्षापूर्वैव
वितंडाजल्पएवच॥उच्चनीचत्वनिर्णीतिर्यतोजयपराजयौ॥विनैवतत्त्वनिर्णीतिंनहिजल्पादिनाक्वचित्॥उच्च
नीचत्वविज्ञानमितिविद्यापरीक्षणं ॥ वादेनचोच्चनीचत्वविज्ञानंभवतिस्फुटं॥इतिवादस्यपूर्वत्वंतत्सिद्धौव्यर्थ

अनु

॥ १९ ॥

तान्ययोः ॥ बहुविद्यत्वसिद्धौतुनैववादोपिकारणं ॥ सभासभापप्राश्नीकपूर्वस्तुस्पर्धिनामपि ॥ वादएवोभयार्थःस्यान्निर्णीतिजयकारकः ॥ तत्त्वाप्रकाशएवैकोवितंडाजल्पयोःफलं ॥ विनावादेनविद्यायायदिशक्यंपरीक्षणं ॥ स्याज्जल्पादिरपिक्वापिवादएवान्यथाभवेत् ॥ जल्पइत्यपिनामस्याद्वादस्यैतादृशस्यतु ॥ प्रतिज्ञामात्रसाध्यत्वमपिस्याद्याज्ञवल्क्यवत् ॥ संवादेवादिनोःक्वापिविवादेहेतुरिष्यते॥सभासभापतिश्चैवप्राश्निकाश्चैववैष्णवाः ॥ रागद्वेषविहीनाश्चस्युःसभ्याःसर्ववेदिनः ॥ प्राश्निकाश्चैतदज्ञानेसभ्याश्चैषांचदूरगाः ॥ प्रमाणंनिर्णयायस्युःपक्षपातविवर्जिताः ॥ उभाभ्यांसाधनंचैवदूषणंवादजल्पयोः ॥ सद्भिरागमएवैकःप्रयोज्योभीष्टसाधकः ॥ स्वसिद्धांतानुसारेणह्यसद्भिरनुमोच्यते ॥ प्रत्यक्षागमवैरूप्यमाश्रित्यान्यार्थतैवतु॥ आगमेदर्शनीयात्रदोषोलिंगविलोमता ॥ लिंगानुकूल्यंस्वार्थस्यश्रुत्यादीनामनुग्रहः ॥ त्रिपंचावयवामेवयुग्मावयविनीमपि ॥ नियमाद्योनुमांब्रूयात्तंब्रूयाद्यदितादृशी ॥नानुमेतितदाकेनसाध्यावयवकल्पना ॥ नियतावयवासिद्धौव्याप्तिमात्रेणसाधनं ॥ कर्तव्यमेवतेनस्यात्तस्मात्सैवानुमामता ॥ अनुभूतिःप्रमाणंचेत्केनस्मृतिरपोद्यते ॥ पूर्वानुभूतेःकिंमानमित्युक्तेस्यात्किमुत्तरं ॥ मानसंतद्धिविज्ञानंतच्चसाक्षिप्रमाणकं ॥ अतीतानागतंयद्वद्योगिभिर्दृश्य ॥१७९॥

व्याख्या॰

२।१

तेंजसा ॥ एवंपूर्वानुभूतंचमनसैवावगम्यते ॥ विज्ञातंमनसापूर्वंमयैतत्कृतमित्यपि ॥ साक्षादनुभवात्सिद्धंक
थमेवह्यपोह्यते ॥ एवंलक्षणकेमानत्रयेब्रह्मादिवस्तुषु ॥ प्रमाणंवेदएवैकस्तत्प्रामाण्यंचसाधितं॥ २॥ ॥ॐअभि
मानिव्यपदेशस्तुविशेषानुगतिभ्यांॐ ॥ ॥ तथापिमृज्जलादीनांबुद्धिवागादिवाचकः ॥ दृष्टव्याप्तिविरुद्धत्वा
त्तत्रमानंकथंभवेत् ॥ ततस्तन्नामकःकश्चित्पुमानन्योभवेदिति ॥ युक्त्यागमाविरोधेनप्राप्तमत्राभिधीयते ॥
बालरूढिंविनैवापिविद्वद्रूढिसमाश्रयात् ॥ तत्तन्नामानएवैतेतत्तद्वस्त्वभिमानिनः॥ संतितेषांविशेषेणशक्तिर
न्येभ्यउच्यते ॥ व्याप्तिश्चोक्तानुसारेणदृश्यंतेचाधिकारिभिः ॥ शास्त्रोक्तवस्तुनश्चैवव्युत्पत्तिःशास्त्रलिंगतः ॥
व्युत्पत्तिःसाबलवतीमूर्खव्युत्पत्तितोहियत् ॥ दृढयुक्तिविरोधेतुसर्वत्रन्यायईदृशः ॥ ३ ॥ ॥ ॐअसदितिचेन्न
प्रतिषेधमात्रत्वात्ॐ ॥ ॥ अल्पवाक्ययुतायुक्तिर्बहुलैवविरोधिनी ॥ यत्रतत्रकथंवस्तुनिर्णयःस्यादिती
रिते ॥ विरोधियुक्तिबाहुल्यादितिन्यायोविनिश्चितः ॥ युक्तेस्तुयुक्तिबाहुल्यमागमादागमस्यच ॥ कथंन
निर्णयंकुर्यादित्यसत्कारणंनहि ॥ श्रुत्यर्थोभवतिक्वापिश्रुतिप्रायोपपत्तिभिः ॥ अविरोधश्चतुर्थेतुपादेसम्य
क्समर्थ्यते ॥ असत्कार्यंयथादृष्टंवस्तुत्वात्कारणंतथा ॥ इतिचेन्ननिषेधैकस्वरूपस्यनकर्तृता ॥ बुद्धिपूर्वप्रवृ

त्तिर्हिकर्तृत्वमितिनिश्चितं ॥ प्रतिषेधात्मकत्वंतुभावस्याभावधर्मतः ॥ धर्मधर्म्यैक्यतश्चैवनतुतन्मात्रताभवेत्
॥ अभावस्यचभावोहिधर्मोथापिहिधर्मिणः ॥ तादृक्त्वंमात्रतेहोक्ताबुद्धिराहित्यमेवतत् ॥ विशेष्यतैवध
र्मित्वंप्रथमप्रतिपत्तिषु ॥ निषेधविधिरूपत्वंभावाभावत्वमत्रहि ॥ ॥ ॐअपीतौतद्वत्प्रसंगादसमंजसंॐ ॥ ॥
सर्वनाशेष्वपिसदाशिष्टत्वाद्यस्यकस्यनुः ॥ नाशोयंविमतोपिस्यान्नाशत्वात्कर्तृशेषवान् ॥ नचाशेषनृनाशस्तुदृ
ष्टोदृश्योस्तिवाक्वचित् ॥ धर्माधर्माश्रयत्वेनस्वीकार्योपिनंरोलये ॥ अनादित्वंविनादृष्टंकथंस्यात्कारणंक्वचि
त् ॥ पूर्वादृष्टात्परादृष्टंयदिनैवोत्तरंकुतः ॥ अदृष्टंकारणंनोचेल्लयेमानंचकिंभवेत् ॥ उत्पत्तिनाशकारीचबुद्धि
मान्दृश्यतेक्वचित् ॥ तद्दृष्टांतेनसर्वत्रकर्ताकिंनानुमीयते ॥ आगमानुगृहीतातुमानमेषानुमापितु ॥ ॥ ॐतर्का
प्रतिष्ठानादप्यन्यथानुमेयमितिचेदेवमप्यनिर्मोक्षप्रसंगःॐ ॥ ॥ आगमानुग्रहाभावेनतर्कःस्यात्प्रतिष्ठितः ॥
अक्षजागममूलस्यस्यादेवास्यप्रतिष्ठितिः ॥ अन्यथास्याप्रतिष्ठाचस्ववाचाव्याहतैवहि ॥ ॥ॐएतेनशिष्टाअप
रिग्रहाअपिव्याख्याताःॐ ॥ ॥ नचशिष्टागृहीतत्वंनिरीशादीशवादिनः ॥ अतोऽवशिष्टजीवादिकर्तृतात्र
निषिध्यते ॥ तन्मनोकुरुतेत्यादेरसतोमनसोजनिः ॥ निवारितातुपूर्वत्रह्यकस्माददिततद्विना ॥ असतोवि

श्वजननमाशंक्यात्रनिषिध्यते ॥ प्रापकंवाक्यमात्रंतुपरिहारोविशेषितः ॥ क्वचिज्जीवाकृतंदृष्ट्वाचेतनादेवचा
कृतं ॥ तद्वदेवानुमान्यत्रवस्तुत्वाक्रियतेश्रुतेः ॥ ४ ॥ ॥ ॐभोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्ॐ ॥ ॥ ना
न्यदन्यत्वमापन्नंक्वचिद्दृष्टंकथंचन ॥ अतोजीवस्यनब्रह्मभावःस्याद्धिकदाचन ॥ क्वचिद्भिन्नतयादृष्टंतदभिन्न
तयाकथं ॥ दृश्येन्नोदृष्टपूर्वंहितादृशंनचदृश्यते ॥ भोक्तृत्वापत्तितइतियन्मतंतत्कुतोहरिः ॥ भोक्त्रापत्तेरिति
प्राह ॥ ५ ॥ ॥ ॐतदनन्यत्वमारंभणशब्दादिभ्यःॐ ॥ ॥ कथंचतदनन्यता ॥ जगतस्त्वविकारित्वउक्तन्या
येनसाधिते ॥ ॥ स्वतंत्रकारणान्यत्वंतेनह्यत्रनिषिध्यते ॥ ॥ ॐसत्वाच्चावरस्यॐ ॥ ॥ ॐअसद्व्यपदेशान्नेति
चेन्नधर्मांतरेणवाक्यशेषात्ॐ ॥ ॥ द्रव्यंकर्मचकालश्चस्वभावश्चेतनाधृतिः ॥ यत्प्रसादादिमेसंतिनसंतियदुपेक्ष
या ॥ इतिश्रुतेस्तद्वशस्यभावोनपरइत्यतः ॥ ॥ ॐयुक्तेःशब्दांतराच्चॐ ॥ ॥ शक्तोपिह्यन्यथाकर्तुंस्वेच्छानिय
मतोहरिः ॥ कारणैर्नियतैरेवकरोतीदंजगत्सदा ॥ नित्यभेदोनिमित्तेनह्युपादानेनतुद्वयं ॥ असद्व्यत्कार्यरू
पेणकारणात्मतयास्तिहि ॥ अनवस्थान्यथाहिस्यात्सर्वत्रोत्पत्तिनाशयोः । शक्तोपिभगवान्विष्णुरकर्तुंकर्तुम
न्यथा ॥ स्वभिन्नंकारणाभिन्नंभिन्नंविश्वंकरोत्यजः ॥ इतिश्रुतेरवसितउक्तोर्थोयमशेषतः ॥६॥ ॥ ॐइतर

अनु व्यपदेशाद्धिताकरणादिदोषप्रसक्तिःॐ॥ ॥ अनंशस्यापिजीवस्यकिंचित्सामर्थ्ययोजनं ॥ कार्येषुयःकरो व्याख्या
॥२१॥ त्यद्धानमस्तस्मैस्वयंभुवे ॥ यदिभागेनकार्येषुजीवशक्तिंनयोजयेत् ॥ हरिस्तदाहिसर्वत्रकृत्स्नयत्नोंशितापि २।१
वा ॥ अंशिनोहिपटाद्यायेभिन्नैरेवपरस्परं ॥ अंशैरंशिनउच्यंतेनैवमेवहिचेतनाः ॥ अतोनंशिनइत्येवश्रुति
रेतेषुवर्तते ॥ अप्यनेकस्वरूपेषुविशेषादेवकेवलं ॥ बहुस्वरूपताख्यातुतेष्वस्त्येवहिसांशता ॥ बहुत्वेनावि
नाभावाद्भिन्नतानियमाद्भवेत् ॥ यदिनैवंनियमकृद्भगवान्पुरुषोत्तमः ॥ ७ ॥ ॥ ॐश्रुतेस्तुशब्दमूलत्वात्
ॐ ॥ ॥ तस्यत्वशेषशक्तित्वाद्युज्यतेसर्वमेवच ॥ विरोधःसर्ववैशिष्ट्येयोद्वितीयेनिरस्यते ॥ नारायणस्यत्व
ध्यायेतदन्येतत्रतत्रगाः ॥ सृष्टिसंहारवाक्यानांजीवरूपाभिधायिनां ॥ अप्यन्योन्याविरोधस्तुद्वितीयाध्या
ण यगोचरः ॥ ॥ ॐविकरत्वान्नेतिचेत्तदुक्तंॐ ॥ ॥ मानमेयविशेषेणपुनरुक्तिर्नजायते ॥ ८ ॥ ॥ ॐ
नप्रयोजनवत्त्वात्ॐ ॥ ॥ ॐलोकवत्तुलीलाकैवल्यंॐ ॥ ॥ सदाप्रवृत्तिरीशस्यस्वभावादेवकेवलं ॥ अं
गचेष्टायथापुंसःकाश्चिदुद्देशवर्जिताः ॥ देवस्यैषस्वभावोयमित्याहश्रुतिरंजसा ॥ क्रीडांप्रयोजनंकृत्वासृष्टिः ॥१८१॥
श्रुतिविरोधिनी ॥ इतिकेवललीलैवनिर्णीताप्रभुणास्वयं ॥ आत्मप्रयोजनार्थायस्पृहांश्रुतिरवारयत् ॥ नप्र

योजनवत्त्वेनेत्यतआहजगद्गुरुः॥इच्छामात्रंप्रभोःसृष्टिरितिसृष्टौविनिश्चिताः।इतिप्रशंसयाकामश्रुतिभ्यश्चैव
युक्तितः॥ महातात्पर्ययुक्तेश्चनेच्छामात्रंनिषिध्यते ॥ मोक्षार्थाःश्रुतयोयस्मात्सचतस्यप्रसादतः ॥ उन्निनी
षतिवाक्याच्चलोकदृष्टानुसारतः॥ इच्छानिमित्तकोयस्मात्तदभावेकुतःश्रुतिः॥ महातात्पर्यरहिताप्रमाणत्वं
गमिष्यति ॥ याथार्थ्यमेवमानत्वमपिवाक्यंप्रयोजकं॥ मानत्वमेतितत्रापियत्संपूर्णप्रयोजनं ॥ ९ ॥ ॥
ॐवैषम्यनैर्घृण्येनसापेक्षत्वात्तथाहिदर्शयतिॐ ॥ ॥वैषम्यंचैवनैर्घृण्यंवेदाप्रामाण्यकारणं॥नांगीकार्यमतो
न्यत्तुनवैषम्यादिनामकं॥१०॥ ॥ॐसर्वधर्मोपपत्तेश्चॐ॥ ॥यदधीनागुणाश्चैवदोषाअपिहिसर्वशः॥ गु
णास्तस्यकथंनस्युःस्युर्दोषाश्चकथंपुनः॥सर्वधर्मोपपत्तेस्तद्वाक्यैरपिहितादृशैः ॥ निर्दोषाशेषगुणकोनिर्णी
तोभगवान्हरिः ॥ ११॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेद्वितीया
ध्यायस्यप्रथमःपादः ॥ २॥ १ ॥ ॥ ॥ ॥ ॥
ॐ॥ स्मृतियुक्तिश्रुतिगुणयुक्तयोबहुयुक्तयः॥एवंचतुर्विधानैवविरुध्यंतेन्वयंप्रति॥ इतिप्रथमपादेननिर्णीते
प्यभियोगतः॥ दर्शनानांप्रवृत्तत्वान्मंदआशंकतेपुनः॥ अनादिकालतोवृत्ताःसमयाहिप्रवाहतः॥नचोच्छेदो

स्तिकस्यापिसमयस्येत्यतोविभुः ॥ भ्रांतिमूलत्वमेतेषांपृथग्दर्शयतिस्फुटं ॥ तर्कैर्दृढतमैरेववाक्यैश्चागमवादि
ना ॥ दौर्लभ्याच्छुद्धबुद्धीनाबाहुल्यादल्पवेदिनां ॥ तामसत्वाच्चलोकस्यमिथ्याज्ञानप्रसक्तितः ॥ विद्वेषा
त्परमेतत्त्वेतत्त्ववेदिषुचानिशं॥अनादिवासनायोगादसुराणांबहुत्वतः॥दुराग्रहगृहीतत्वाद्धर्तंतेसमयाःसदा
॥तथापिशुद्धबुद्धीनामीशानुग्रहयोगिनां ॥ सुयुक्तयस्तमोहन्युरागमानुगताःसदा ॥ इतिविद्यापतिःसम्य
क्समयानांनिराकृतिं ॥ चकारनिजभक्तानांबुद्धिशाणत्वसिद्धये ॥ ॥ ॐरचनानुपपत्तेश्चनानुमानंॐ ॥ ॥
चेतनाचेतनंतत्त्वद्धयमेवनिरीश्वराः ॥ आहुस्तत्पंचपंचत्वविभागस्थमचेतनं ॥ चेतनंतदसंख्यातंभिन्नमन्य
द्धिदोज्झितं॥ अचेतनस्यकर्तृत्वंस्वातंत्र्येणनिगद्यते ॥ परस्परविभेदश्चकार्याणामालयंभवेत् ॥ भोक्तृतांचेत
नस्याहुःकेचित्तामपिनापरे ॥ स्वरूपचैतन्यबलात्स्वप्रकाशाच्चभोगितां॥प्रकृतेश्चस्वरूपस्यविवेकाग्रहमेवतु॥
अभोगवादिनोभोगमाहुर्भेदग्रहात्तयोः ॥ भोगिनामुक्तिरुद्दिष्टासएवाभोगवादिनां ॥ ईशस्यासंग्रहादेवनयु
क्तौतावुभावपि ॥ चेतनेच्छानुसारेणयदादृष्टःपटोद्भवः॥एतादृशत्वमन्यस्यवस्तुत्वात्केनवार्यते ॥ नचकाचि
त्प्रमोक्तार्थेश्रुतिरेवप्रमाहिनः ॥ आप्तत्वमुक्तमार्गेणवक्तुर्नैवोपपद्यते ॥ अप्रामाण्यस्वतस्त्वस्यस्वीकारादपिमा

यिवत् ॥ स्वोक्ताखिलनिषेधीस्यान्नचकिंचित्प्रसिध्यति ॥ इदंनाचेतनवशंवस्तुत्वात्प्रतिपन्नवत् ॥ इत्येवप्रति
षिद्धस्यकेनमूलानुमाभवेत् ॥ स्वतंत्रवृत्तीरचनासाचैवाचेतनेकुतः॥अचेतनत्वंस्वातंत्र्यमितिचात्मप्रमाहतं॥
स्वेच्छानुसारितामेवस्वातंत्र्यंहिविदोविदुः ॥ कुतइच्छाचेतनस्यसेच्छंचेत्किमचेतनं॥इच्छाम्यहमितिह्येवनि
जानुभवरोधतः ॥ अचेतनेच्छापगतायदिभेदाग्रहोत्रच॥कथंसनघटस्यस्यान्मनोमइतिभेदतः ॥ मनसोपिगृ
हीतत्वादुभयात्मकतायतः ॥ कामस्यतुमनःकामःप्रियाप्रियविभेदतः ॥ द्वैविध्यंदृश्यतेचास्यतस्माद्भेदाग्रहः
कुतः ॥ रचनानुपपत्तेस्तन्नसर्वज्ञानुमागतं ॥ अचेतनंजगत्कर्तृ ॥ ॥ ॐपयोंबुवच्चेत्तत्रापिॐ ॥ ॥ पयोंब्वादि
चनोपमा ॥ एतत्प्रशास्तिवचनाच्चेतनाचेतनस्यच॥ द्वैविध्येपितुकामादेःकुतःस्वामित्वमात्मनः ॥ साक्षादनु
भवारूढंशक्यतेऽपोदितुंक्कचित् ॥ इच्छास्वामित्वमेवोक्तमिच्छावत्त्वंनचापरं ॥ किंचित्तद्वशगत्वेपिस्वामित्वं
लोकवद्भवेत् ॥ सर्वात्मतंत्रकामादेःकिमुतैवपरेशितुः ॥ नचानुभवगंकामस्वामित्वंवेदवागपि ॥ शक्तापवदि
तुंतस्मात्सातदन्याभिधायिनी॥मोक्षकामोभवेदन्योयदिमुक्ताद्भविष्यतः॥ मोक्षकामस्यकिंतेनस्वनाशार्थंच
कोयतेत् ॥ कर्तृत्वंयस्यतस्यैवभोक्तृत्वमुपलभ्यते ॥ विभागेचतयोर्मानंनैवकिंचित्क्कचिद्भवेत् ॥ सर्वमानवि

रोधैकदुर्दीक्षादीक्षितस्त्वयं ॥ मायावाद्युपमांयायात्तत्त्वशब्दान्निराकृतः ॥१॥ ॥ ॐअन्यत्राभावाच्चनतृणादि
वत्ॐ ॥ ॥ सांख्यस्तुसेश्वरोब्रूतेक्षेत्रानुग्रहशक्तिमान् ॥ अस्तीश्वरःस्वयंभातःक्लेशकर्मादिवर्जितः ॥ क्षेत्रश
क्तिमतीसैवप्रकृतिर्बीजशक्तिमान् ॥ जीवःपर्जन्यवद्दैवशक्तिमानीश्वरःस्मृतः॥ पृथिवीवत्प्रधानंतज्जीवःसन्नि
धिमात्रतः॥बीजावपनकर्तैवेत्यत्रप्राहस्वयंप्रभुः ॥ अन्यत्रकापिशक्तिर्नस्वातंत्र्येणेशएवहि ॥ शक्तीस्ताःप्रेरय
त्यंजस्तदधीनाश्चसर्वदा ॥ सत्ताप्रधानपुरुषशक्तीनांचप्रतीतयः ॥ प्रवृत्तयश्चतास्सर्वानित्यंनित्यात्मनायतः॥
तथानित्यतयानित्यंनित्यशक्त्यास्वयेश्वरः ॥ नियामयतिनित्यंचनऋतेत्वदितिश्रुतेः ॥ स्वभावजीवकर्माणि
द्रव्यंकालःश्रुतिःक्रियाः ॥ यत्प्रसादादिमेसंतिनसंतियदुपेक्षया ॥ इतिश्रुतेर्नसत्ताद्याअपिनारायणंविना ॥ त
त्पतंजलिविंध्यादिमतंनपुरुषार्थदं ॥ २ ॥ ॐअभ्युपगमेप्यर्थाभावात्ॐ ॥ ॥ चार्वाकैरुच्यतेमानमक्षजंनाप
रंक्वचित् ॥ देहआत्मापुमर्थश्चकामार्थाभ्यांविनानहि ॥ यदैवंदर्शनेनास्यकोर्थःप्रत्यक्षगोचरः ॥ लब्धस्तेनैव
हिनरैःशास्त्रात्किंमोहनंविना ॥ स्वपरार्थविहीनत्वात्स्वमतेनैवनिष्फलं ॥ किमित्युन्मत्तवच्छास्त्रंवृथाप्रलपति
स्वयं ॥ देहादन्योनुभवतआत्माभातिशरीरिणां॥ममदेहइतिव्यक्तंममार्थइतिवत्सदा ॥ प्रत्यक्षस्यैवमानत्वमि

तिकेनावसीयते ॥ यदितत्साधकंवेदप्रामाण्येनकथंभवेत् ॥ नचान्यामानताक्कापिप्रमाणेनावसीयते ॥ खम
तेनार्थरहितउपेक्ष्यःपक्षईदृशः ॥ ३ ॥ ॥ ॐपुरुषाश्मवदितिचेत्तथापिॐ ॥ ॥ सन्निधानाच्चेतनस्यवर्ततेयद्य
चेतनं ॥ तथाप्यबुद्धिपूर्वत्वादुक्तदोषःसनोभवेत् ॥ ॥ ॐअंगित्वानुपपत्तेःॐ ॥ ॥अंगित्वंपुरुषस्यैवसर्वैरेवानु
भूयते ॥ तदंगत्वोक्तितश्चैवस्यात्सर्वस्यापलापकः ॥ किमुसर्वेश्वरस्यास्यह्यपलापाद्यतोखिलं ॥ ४ ॥ ॥ ॐ
अन्यथानुमितौचज्ञशक्तिवियोगात्ॐ ॥ ॥ अंगित्वंयदितस्यैवस्वातंत्र्यंचेन्नचाखिलं ॥ तत्प्रेरणेप्यशक्तत्वा
त्स्वतंत्रोन्योह्यपेक्षितः ॥ नचस्वातंत्र्यमस्यैवप्रत्यक्षादिविरोधतः ॥ हिताक्रियादिदोषाच्चभद्रंनानीश्वरंमतं ॥
संसारिणोन्यंसर्वेशंसर्वशक्तिमनौपमं ॥ चेतनाचेतनस्यास्यसत्त्वादेस्तदधीनतां ॥ नांगीकुर्वंतियेतेषांसर्वेषांच
समाइमे ॥ तस्माच्छ्रुतिप्रमाणेनयुक्तिभिश्चपरोहरिः ॥अंगीकार्यतमोनित्यःसर्वैरपिसुनिश्चितं ॥५॥ ॥ॐमह
द्दीर्घवद्वाह्रस्वपरिमंडलाभ्यांॐ ॥ ॥ नित्यज्ञानप्रयत्नेच्छंसंख्याद्यैरपिपंचभिः ॥ युक्तमीशंवदंतोन्येतदिच्छा
दृष्टचोदिताः ॥ परमाणवश्चतुर्वर्गाःसंयुज्यंतेद्विशोखिलाः ॥ परमाणुद्वयेनैवद्व्यणुकंनामजायते ॥ द्व्यणुकत्रये
णत्र्यणुकंतैश्चतुर्भिस्तदात्मकं ॥ ततस्त्वनियमेनैवखंडावयविनांभवः ॥ ततश्चानियमेनैवसर्वावयविसंभवः ॥

अनु ॥ २४ ॥

कारणंसमवाय्याख्यंपरमाण्वादिरत्रहि ॥ ईशेच्छादृष्टकालास्तुनिमित्तंकारणंमतं॥सामान्यांत्यविशेषौचसम
वायश्चतत्रयं ॥ नित्यंक्रियाअनित्याश्चगुणद्रव्येद्विरूपके ॥ कार्येगुणक्रियाणांतुसमवाय्यन्यकारणं ॥ कारण
स्थागुणाद्यास्तुसंयोगोद्रव्यकारणं॥ एवंस्थितेपिसिद्धांतेविशेषस्तत्रकल्पितः ॥ द्व्यणुकेपरमाणौचह्रस्वत्वंपरि
मंडलं ॥ नकारणंकार्यगुणेवैरूप्यंतत्रकारणं ॥ इत्याहुस्तानथोवाचविद्याधीशःस्वयंप्रभुः ॥ महत्त्वंचैवदीर्घत्वं
त्र्यणुकाद्येषुकल्पितं ॥ तस्माच्चसदृशंकार्यंतत्कार्येषूपजायते ॥ यथातथैवह्रस्वत्वात्पारिमांडिल्यतोपिहि ॥
जायेतसदृशंकार्येपरिमाणंसमत्वतः ॥ नचेन्महत्त्वतश्चैवदीर्घत्वादपिनोभवेत्॥ सदृशस्यहिकार्यस्यनैवयो
गःकथंचन ॥ अप्रत्यक्षत्वमेवस्याद्यतःकार्येष्वणुत्वतः ॥ इतिचेन्नमहत्त्वंचपरमाणावणावपि ॥ कथंद्व्यणुक
पूर्वेषुनाणुत्वमपिकथ्यते ॥ प्रत्यक्षत्वतदन्यत्वेपुरुषापेक्षयाखिले ॥ अणुत्वंचमहत्त्वंचयतोवस्तुव्यपेक्षया ॥
तारतम्यस्थितायस्मात्पदार्थाःसर्वएवच ॥ यथामहत्त्वविश्रांतिस्तथाणुत्वस्यचेष्यते ॥ परिमाणत्वतश्चेन्नम
हत्त्वस्यापिविश्रमः ॥ दृश्यतेनंतइत्येवतथानंत्यमणावपि ॥ नमहत्तत्त्वगुणतएतावानितिहीश्वरः॥ परिच्छि
न्नस्तथाणोश्चनैतावद्भागताक्वचित् ॥ विश्रांतोयद्यनंतांशःक्वचिदस्तीतिगम्यते ॥ नावसाययितुंशक्योविरो

व्याख्या. २।२

धादेवकेवलं ॥ केवलंसाक्षिमानेनकालोदेशोपिनांतवान् ॥ अपर्यवसतिश्चाणोर्दृश्यतेसाक्षिणाद्धयोः ॥ य
दिनोसाक्षिगम्यंतन्महत्त्वंकेनगम्यते ॥ विश्रांतिस्तारतम्येनदृश्यतेह्यनुमानतः ॥ यद्यागमादनंतंतन्महत्त्व
मवगम्यते ॥ अनंतमेवचाणुत्वंकुतोनैवावसीयते ॥ महत्त्वाणुत्वयोर्नैवविश्रांतिरुपलभ्यते ॥ अन्यदेवह्यनं
तत्वंमहत्त्वाणुत्वयोःसमं ॥ बहुत्वाल्पत्वयोर्यद्वत्संख्यायामुपलभ्यते ॥ आनंत्यमेवभागानांतावत्त्वंह्यवगम्य
ते ॥ अणीयांश्चमहीयांश्चभगवानागमोदितः ॥ आनंत्यवाचकःशब्दोह्धिधानंत्येपिमानतां ॥ यातिनैवगु
णाल्पत्वंकालाल्पत्वंचमानगं ॥ सर्वकालगतस्याल्पकालेपिस्यादवस्थितिः ॥ महागुणस्यचाल्पोपिगुणःस्या
दितिचेद्भवेत् ॥ तावत्त्वमेवनैवस्याद्देशेप्यतन्ननोमतं ॥ महतोल्पत्वमपिहिव्योमवत्प्राहवेदवित् ॥ यद्यल्प
देशसंस्थानंनसर्वत्रापिनोभवेत् ॥ स्थितस्यह्यल्पदेशेषुसर्वगत्वंभवेद्ध्रुवं ॥ एकत्राप्यनवस्थस्यकुतएवाखिल
स्थता ॥ शून्यत्वमेवतस्यस्याद्यस्यैकत्रापिनस्थितिः ॥ अतोनाणुत्वविश्रांतिर्नमहत्त्वस्यचक्वचित् ॥ उभ
यानंत्ययुक्तस्याद्यदिमुख्यंमहद्भवेत् ॥ तच्चब्रह्मपरंसाक्षात्सर्वानंत्ययुतंसदा ॥ यदिसाक्षीस्वयंभातोनमानंके
नगम्यते ॥ अक्षजादेश्चमानत्वमनवस्थान्यथाभवेत् ॥ अतःसर्वपदार्थानांभागाःसंत्येवसर्वदा ॥ सर्वदिक्ष्व

पिसंबंधादविभागःपराणुता ॥ तत्संयोगादनियतात्पदार्थानांजनिर्भवेत् ॥ द्वयोरेवतुसंयोगइतिकेनावसी
यते ॥ कारणस्यगुणास्तेनभवेयुःकार्यगाअपि ॥ तारतम्येनसर्वेपिमहांतश्चाणवोयतः ॥ नचतत्प्रोक्तसृष्टौतु
मानंकेवलकल्पना ॥ कथंसाक्षिमितस्यास्यशक्नुयाद्धारणेक्वचित् ॥ यदिसाक्षिमितंनैतन्नानुमातत्रवर्तते ॥ पक्षी
कर्तुमशक्यत्वात्कुतएवानुमाभवेत् ॥ यत्रनास्तिपदन्यासःकस्तंविषयमाप्नुयात् ॥ देशांतरादिशब्दाश्चशशशृं
गादिशब्दवत् ॥ सदृशंचसजातीयंनास्मत्पक्षेकिमेवहि ॥ येनैवचप्रकारेणात्यसिद्धमनुमीयते ॥ तेनैवशशशृं
गादेःशक्यमस्तित्वकल्पनं ॥ प्रत्यक्षमागमोवापिभवेद्यत्रनियामकः ॥ सैवव्याप्तिर्भवेन्मानंनान्यासंदिग्धमूल
तः ॥ सहदर्शनमात्रेणव्याप्तिरवसीयते ॥ यदैवाव्यतिरेकेऽस्यह्यक्षजंवाऽऽगमोभवेत् ॥ तन्निर्धारितयुक्तिर्वाव्या
प्तिःसैवापरानहि ॥ अन्यथासप्तमरसभावोप्यनुमयापतेत् ॥ अनिष्टानिचसर्वाणिह्यनुमाकामचारिणी ॥ ॥ॐ
समवायाभ्युपगमाच्चसाम्यादनवस्थितेःॐ ॥ कार्यकारणयोश्चैवगुणादेःपंचकस्यच ॥ भिन्नस्यैवतुसंबंधःसमवा
योन्यईर्यते ॥ भिन्नत्वसाम्यतस्तस्यताभ्यांयोगोभवेद्ध्रुवं ॥ सस्वनिर्वाहकश्चेत्स्याद्द्रव्यमेवतथानकिं ॥ विशेष
स्तद्गतत्वादिर्यद्यभिन्नेवसीयते ॥ गुणक्रियादिरूपस्यनिषेधःकेनहेतुना ॥ द्रव्यमेवततोनंतविशेषात्मतयासदा ।

नानाव्यवहृतेर्हेतुरनंतत्वंविशेषतः॥विशेषश्चविशेषीसस्वेनैवसमवायवत्॥ कल्पनागुरुतादोषात्पदार्थांतरता
नहि॥कल्पयित्वाषट्पदार्थान्साभावानपिकेवलं॥एकस्मिन्सविशेषश्चेत्किंपूर्वंतस्यविस्मृतिः॥येनप्रत्यक्षसि
द्धेनव्यवहारोखिलोभवेत्॥भावाभावविभागेनयंविनानकथंचन।ऊताद्दशेविशेषेस्मिन्कोद्वेषोवादिनांभवेत्। ए
अभेदेनप्रतीतिश्चकार्यकारणपूर्वके।अभावातेपदार्थोस्मिन्सविशेषावसीयते। सामान्यादिपदार्थेषुतन्निष्ठत्वा
दयोखिलाः॥ कथंधर्मानिवार्यंतेवस्त्वैक्येपिहिवादिभिः॥ कार्यस्यतत्तन्निष्ठत्वंगुणादेर्व्यापितादिकः॥ कथं
विशेषोनैवास्तिसचधर्मपरोयदि॥ षट्पदार्थातिरेकःस्यात्पदार्थानियमेपिहि॥ धर्मस्यधर्मसंतानादनवस्था
खनिर्भवेत्॥ सामान्यस्यापिसामान्यंगुणस्यापिगुणोह्यतः॥ नांगीकृतःसचयदिनानवस्थाक्वचिद्भवेत्॥ अ
सत्पक्षेगुणाद्याश्चतद्वंतोहिविशेषतः॥ अनन्यत्वान्नानवस्थाभेदोनाशेभवेत्तथा॥ विशेषमेवसंश्रित्यविशेषो
बलवान्यतः॥दृष्टिप्रमाणतश्चैवविरोधोदर्शनेकथं॥विरोधोह्यविरोधश्चयतोदर्शनमानकौ। ततोदृष्टेविरोधस्तु
सद्भिरापाद्यतेकथं॥अभिन्नोभगवान्स्वेनतदन्येनविभेदवान्॥नित्याधर्मास्तदीयास्तुसर्वेऽस्मान्नैवभेदिनः।सा
मस्त्योच्छेदिनोन्यत्रधर्माउभयरूपिणः॥भावेतएवचोच्छेदात्तदन्येचसमस्तशः। अंशांशिनोरभेदेनत्वंशसंयो

अनु
॥ २६ ॥

गएवहि॥अंशिनोनानवस्थातोयद्यप्यंशेष्वविश्रमः॥एकस्मिन्जातएवान्यःसंयोगोजायतेयदि॥ अनवस्था
तदैवस्यात्संयोगैक्येभवेत्कसा॥ अंशेसंयोगदृष्टेश्चदृष्टेकासानवस्थितिः॥यद्यंशगोनसंयोगःकार्येषुप्रथिमाक
थं॥ परमाणोरणोर्नास्तिमहत्त्वेत्यद्भुतंवचः॥ अणूनांप्रथिमापेक्षांविनैवत्र्यणुकेपिसः॥ परमाणोर्महत्त्वंचवि
नेत्येतद्वचःकथं॥ अंशिनोंशैरभेदोयमंशेनतुभिदाभिदा॥ सर्वप्रत्यक्षविषयःकथमेवह्यपोद्यते॥ संयोगश्च
विभागश्चभेदश्चैवपृथक्पृथक्॥ अन्योन्यप्रतियोगेनह्युभयोरपिदृश्यते॥ भिन्नाइतितुभेदानांसमुदायोहि
दृश्यते॥ यथैवचपदार्थानामनयोर्भेदइत्यपि॥ इतोमुष्यामुतोमुष्यभेदोदृष्टोद्विधर्मिकः॥ तत्रैकवचनंयत्त
द्विप्राणांभोजनंयथा॥ नरत्वादिकमप्येवंतत्तधर्मतयेयते॥ नसर्वधर्मएकोस्तिसमुदायस्तुभिन्नगः॥ एता
दृशंचसादृश्यंपदार्थेषुपृथक्पृथक्॥ एकस्मिन्सविनष्टेपियतोन्यत्रैवदृश्यते॥ कुतोभस्मत्वमाप्तस्यनरत्वंपुनरि
ष्यते॥ एकत्वेनास्तिमानंचश्रुतिरप्याहसादरं॥ भिनाश्चभिन्नधर्माश्चपदार्थानिखिलाअपि॥स्वैःस्वैर्धर्मैरभि
न्नाश्चस्वरूपैरपिसर्वशः॥अनिवृत्तविनाशास्तुधर्माउभयरूपकाः॥ नकेनचिदभिन्नोतोभगवान्स्वगुणैर्विना॥ ॥१८॥
इतिव्युत्पत्तिरपिहिसादृश्येनैवगम्यते॥ सर्वेषुयुगपच्छब्दःसदृशेषुप्रवर्तते॥ तथापिप्राप्तितस्त्वेकवचनाद्यवि

व्याख्या.
२।२

शेषतः ॥ अभीष्टावगतिश्चस्याच्छक्तिःसादृश्यगायतः ॥ तादृशोयंचतच्छब्दइतिज्ञापयतिस्फुटं ॥ जातितश्चे
त्कथंतासुतत्रचेदनवस्थितिः ॥ तथैवव्यक्तिविज्ञानंव्यक्तित्वाभावदूषितं ॥ यदितत्त्वास्तितस्यापिविशेषेष्वन
वस्थितिः ॥ कथंस्वरूपत्वमपिज्ञायतेनुगतंयदि ॥ एकव्युत्पत्तिपर्यंतमनवस्थादिदूषितं ॥ कल्पनागौरवा
त्तेनयुक्तानानुगकल्पना ॥ औपाधिकविशिष्टाद्यमपितद्वस्तुकिंततः ॥ अन्यत्तदेवचेदग्निमत्त्वंकिंतत्रभण्यते ॥
अग्निसंयोगमात्रंचेद्भवेत्तत्सिद्धसाधनं ॥ भूधरस्याग्निसंयोगोयदिषष्ठ्यर्थएवकः ॥ समवायोयदिह्यस्यचैक
त्वात्सिद्धसाधनं ॥ यद्यस्यौपाधिकोभेदःकुतएकत्वमिष्यते ॥ नानिर्वाच्यंहितेनेष्टमतऔपाधिकान्ययोः ॥
सत्यत्वात्कोविशेषःस्यान्मायावाद्यन्यथावदेत् ॥ उपाधिजन्यंतद्गम्यमितिचौपाधिकंभवेत् ॥ उभयत्राप्यनंताः
स्युःसमवायाइतस्ततः ॥ भिन्नत्वंचैवतेष्वस्तिकोविशेषउपाधिगे ॥ अविद्यमानएवान्यःसमवायोधिगम्यते ॥
उपाधिनातद्गमकमनुमानंनमाभवेत् ॥ एवमेवासतःसत्तासमवायोजनिर्मता ॥ तत्रापिह्युक्तदोषाणांनैवाकिं
चिन्निवारकं ॥ अस्मत्पक्षेविशेषस्यसर्वत्रांगीकृतत्वतः ॥ नास्तिदोषःक्वचिद्भावोह्यभावश्चसएवहि ॥ अभावस्य
चधर्माःस्युर्भावास्तेषांचतेखिलाः ॥ प्रत्यक्षमानतःसर्वमेतन्नोवारणक्षमं ॥ सर्वेभावाअभावाश्चपदार्थास्तेनसर्वदा

अनु ॥२७॥ ॥तथापिप्रथमंबुद्धेर्योनिषेधस्यगोचरः॥ सोभावोविधिबुद्धेस्तुगोचरःप्रथमंपरः ॥ तस्मात्प्रध्वस्तभेदादिसदित्ये व्याख्या- २।२
वावगम्यते॥अस्त्यभावोस्तिचध्वंसोदेहाभावश्चभस्मता॥इत्यादियुज्यतेसर्वंप्रत्यक्षादिप्रमाणतः॥अन्योन्याभा
वभेदौचपृथक्त्वंचपृथक्पृथक् ॥यत्कल्पयंतितच्चैवकल्पनागौरवाद्धतं ॥ पर्यायत्वेनतेशब्दाज्ञायंतेसर्वएवहि॥
भेदस्यतुस्वरूपत्वेयेवदंतिचशून्यतां ॥ अद्भुतास्तेयतोन्यस्यप्रतियोगित्वमिष्यते ॥ प्रतियोगिनोहिभेदोयंन
तुस्वस्मात्कथंचन॥ विभागेनाल्पतैवस्यात्कुतएवतुशून्यता ॥ नशून्यानांहिसंयोगाद्भावोवस्तुनइष्यते ॥ वि
दारणार्थोधातुश्चविभागगुणवाचकः ॥ अविदारणेपिह्यास्यस्यभिन्नावोष्ठौचतस्यच ॥ अतउन्मत्तवाक्यत्वा
न्मायावादोह्युपेक्षितः॥नचामंदसदानंदस्यंह्यनंतगुणार्णवः॥ ईश्वरोष्टगुणत्वेनप्रमेयोप्रमितत्वतः ॥ मय्यनं
तगुणेनंतेगुणतोनंतविग्रहे॥ अनंतगुणमाहात्म्यशक्तिज्ञानमहार्णवः॥ नारायणःपरोशेषचेतनेभ्यःपरंपदं॥
इत्यादिवेदतद्वाक्यैरनंतैश्चावसीयते॥ अनंतगुणताविष्णोःकथमेवह्यपोद्यते ॥यद्यनंतविशेषाश्चतज्ज्ञानादे
र्निवारिताः॥कथंतत्तद्विषयतासार्वज्ञार्थविधीयते ॥ औपाधिकविशेषस्तुपूर्वमेवनिराकृतः॥ स्वप्रकाशत्वम 
पितुयैर्ज्ञानस्यनिवारितं ॥ कथंसर्वज्ञतातस्यस्वज्ञानाधिगमंविना ॥ ज्ञानंविश्वाधिगंत्वेकंतज्ज्ञानविषयंपरं ॥

इतिज्ञानद्वयेनैवसर्ववित्परमेश्वरः ॥ इतिचेद्दोषएवार्थस्तज्ज्ञानावसितोयदि ॥स्वप्रकाशत्वमेवस्याज्ज्ञानंह्येतद्वि
शेषणं ॥ज्ञानांतरेणचेदत्रभवेद्देवानवस्थितिः॥स्वप्रकाशत्वमेतस्माद्दुर्निवारंसमापतेत्॥सुखवान्दुःखवांश्चस्या
दितिव्याप्तिश्चनोभवेत्॥ निर्दुःखत्वंमहानंदः श्रुत्यैवेशस्यभण्यते॥ योशनायापिपासेचशोकादींश्चातिवर्तते ॥
आनंदंब्रह्मणोविद्वान्विपाप्मेत्यादिकाचसा ॥ ईश्वरस्यतथेष्टत्वंदुःखित्वोपाधिरित्यपि ॥ उक्तेकिमुत्तरंब्रूयाच्छ्रु
त्यनादरतत्परः॥नचात्मदुःखितेच्छास्यादतएतन्निवार्यते ॥सहदर्शनमात्रेणश्रुतीनामपलापकः॥यज्ञादेरपि
पापस्यहेतुत्वंहिंसयायुतेः॥नानुमातिकथंतत्रयद्युपाधिर्निषिद्धता॥अदुःखित्वेनचानुक्तिःकथंनोपाधितांव्रजे
त्॥अदुःखमितरत्सर्वंजीवाएवतुदुःखिनः॥तेषांदुःखप्रहाणायश्रुतिरेषाप्रवर्तते॥इतिश्रुतिर्हिपरमाश्रुत्युक्तिर्य
दिकारणं॥किंकार्यमनुमानेनगलस्तनसमेनहि ॥अनुमानेनयद्यर्थःश्रुतिदृष्टोप्यपोद्यते ॥ पूर्वोक्तेनप्रकारेणने
श्वरोधर्मएवच॥स्यात्तत्फलंचतेनात्रश्रुतिरेवप्रमाभवेत्॥ईशस्यानुमयासिद्धेःश्रुतिर्धर्मिप्रमाभवेत् ॥तयासर्वगु
णैःपूर्णईशउक्तोयतस्ततः॥अनानंदानुमानस्यधर्मिग्राहिविरोधतः॥नप्रमाणंभवेत्तस्मान्नानुमात्रोपयोगिनी॥
नित्येच्छत्वात्परेशस्यपरमाणुसदात्वतः।अदृष्टकालयोश्चैवभावात्कार्यंसदाभवेत्। नहिकालविभेदोस्तितत्पक्षे

अनु स्मन्मतेहरेः। विशेषकालएवैतत्सृष्ट्यादीच्छासदातनी(ना)।विशेषाश्चैवकालस्यहरेरिच्छावशाःसदा।सर्वेनिमे व्याख्या.
॥ २८ ॥ षाइतिहिश्रुतिरेवाहसादरं॥उदीरयतिकालाख्यांशक्तिमित्यस्यवागपि।कालस्यकालगत्वेननविरोधोपिकश्च २।२
न॥असंख्यातविशेषत्वादिच्छायाअपिसर्वदा।ईशोदेशश्चकालश्चस्वगताएवसर्वदा॥ईशाधीनौचतौनित्यंत
दाधारौचतद्गतौ॥इतिश्रुतिरपिप्राहकालेस्वोद्दिष्टएवतु॥तत्कालसृष्टिमेवातोवांछतीशःसदैवहि॥स्यात्कालः
सतदैवेतिकालस्यस्वगतत्वतः।स्वभावादेवहीच्छैषादेवस्यैषइतिश्रुतेः।स्वभावोपिपरेशेच्छावशइत्युदितःपुरा।
नित्याअनित्याश्चततस्तदधीनाइतिश्रुतिः॥ ॥ॐरूपादिमत्त्वाच्चविपर्ययोदर्शनात्ॐ॥ ॥ॐउभयथाचदोषा
त्ॐ॥ ॥ रूपस्पर्शादिहेतुभ्यःपरमाणोरनित्यता॥ अनुमेया॥ ॥ ॐअपरिग्रहाच्चात्यंतमनपेक्षाॐ॥ ॥श्रु
तीनांचविरुद्धत्वान्नतन्मतं॥ उपादेयमतश्चायमविरुद्धःसमन्वयः ॥६॥ ॥ ॐसमुदायउभयहेतुकेपितदप्रा
प्तिःॐ॥ ॥वैभाषिकाश्चसौत्रांताःस्वरसक्षणिकंजगत्॥ अणूनांसमुदायंचकालकर्मनिमित्ततः॥उत्पत्तिकालेयु
क्तानामात्मानंचक्षणस्थितं॥नित्यंसंतानमेतेषांपंचस्कंधात्मनास्थितं। संस्काररूपविज्ञानसंज्ञादुःखात्मनास्थि ॥१८८॥
तिः॥दुःखाभावंसुखंचाहुररूपज्ञानसंततिं ॥ मोक्षंससमुदायोहिनैकस्मादेवयुज्यते॥ नोभयोश्चोभयत्वंयत्स

मुदायव्यपेक्षया ॥ अतोन्योन्याश्रयत्वेनसमुदायोनयुज्यते ॥ ॥ ॐइतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनि
मित्तत्वात्ॐ ॥ ॥ अन्योन्यापेक्षयापुंसःसमुदायत्ववेदनं ॥ स्यात्तत्सदातनत्वेपितच्चसामीप्यहेतुकं ॥ इतिचे
त्कार्यसंभूतिमात्रव्यापृतिकारणं ॥ नतुकार्यविशेषेषुव्यापृतंकारणंभवेत् ॥ अतोर्थेंद्रियसंयोगिरूपकारणता
त्मनः ॥ संयोगिरूपराहित्यान्नैवतज्ज्ञानतापिहि ॥ विशेषकार्यजनकंयदिकारणमिष्यते ॥ कुतःसमानरूपत्वं
कार्याणामपिसर्वशः ॥ अतोऽनियत्यायत्किंचिद्यस्यकस्यापिकारणं ॥ अदृष्टमपितस्यैवविशेषापादकंकुतः ॥
यस्यकस्यापियत्किंचिद्विशेषमुपपादयेत् ॥ कार्यंचकारणंचैवयत्किंचिद्यस्यकस्यचित् ॥ भवेन्नियामकाभावा
दिदमस्यैवकारणं ॥ इतिनित्यविनाशित्वेकेनमानेनगम्यते ॥ इदंनजायतेमुष्मादित्यत्रापिनकारणं ॥ विना
शोत्पत्तयश्चैवनदृश्यंतेसदातनाः ॥ दृश्यतेप्रत्यभिज्ञातःस्थिरत्वंसर्ववस्तुषु ॥ फलादीनांविशेषेणसर्वत्राप्यनुमी
यते ॥ सत्त्वेनक्षणिकत्वंचेदाकाशस्याविशेषतः ॥ अविशेषोखिलस्यापिसत्त्वात्किंनानुमीयते ॥ यद्याकाशस्य
सत्त्वंनकुतएवनरादिषु ॥ सधर्मिप्रतियोगित्वमभावस्यनियामकं ॥ तौविनानह्यभावश्चक्वचिद्दृष्टःकदाचन ॥
अधर्मिप्रतियोगित्वमाकाशस्यावगम्यते ॥ स्वीकारत्यागतोदृष्टदृष्टयोःसर्ववस्तुषु ॥ गुणानुन्मत्तएवासौविदधा

त्यधिकंपुनः ॥ ॥ॐउत्तरोत्पादेचपूर्वनिरोधात्ॐ ॥ ॥ उत्तरोत्पत्तिमात्रेणविनाशात्पूर्ववस्तुनः ॥ नसंस्कारा
र्पकत्वंचयुज्यतेकस्यचित्क्वचित् ॥ अतोज्ञातंमयेत्यादिनज्ञेयमनुमाकुतः॥ एकत्वमनुभूतिस्थंत्यक्त्वानिर्मानि
काभिदा ॥ कुतआत्मादिकेषुस्याद्बल्येवानुभवोयतः ॥ कार्यकारणयोश्चैककालीनत्वंविनाकथं॥पूर्वसंस्कार
योगीस्यादुत्तरोनियमेनच ॥ संबद्धाएवसंस्कारमन्यत्रादधतेखिलाः।असंबद्धःकथंपूर्वउत्तरेवासनाकरः। एक
कालतयायोगंविनासंस्कारतःकथं । क्षणमात्रमवस्थानंस्वीकृतंसर्ववस्तुषु।पूर्वमध्यापरकलाविकलःक्षणइष्य
ते ॥ ॥ ॐअसतिप्रतिज्ञोपरोधोयौगपद्यमन्यथाॐ॥ ॥पूर्वभावभवंकार्यमुततन्नाशसंभवं ॥ यौगपद्यंसतिभवे
दुत्पाद्यानामशेषतः॥ विनाशेचेन्नतत्कार्यंकार्योत्पत्तौचकाप्रमा ॥ अभेदेपिविशेषेणदेहदीपफलादिषु ॥ विशे
षदर्शनंयुक्तमस्माकमनुभूतितः॥ विशेषदर्शनंमानंयदिनस्थैर्यदृक्कुतः॥ दिक्सुखेचखदृष्टांताद्भावौसञ्चेत्क्वचि
द्भवेत्॥विश्वंप्रत्यक्षगंत्यक्त्वातयोर्योनुमितंवदेत्॥मायावादिवदेवासावुपेक्ष्योभूतिमिच्छता ॥ सर्वप्रमाणसि
द्धंयद्बुद्धेर्भेदेनसर्वदा ॥ कथंनुतस्यबुद्धित्वंविश्वमन्यच्चकिंप्रमं ॥ सर्वलोकोबिभेत्यंजोयस्मादनुभवात्सदा ॥ त
स्यापलापिनःकिंननिष्प्रमाणकवादिनः ॥ सोहंतदिदमेवाहंसुखीसद्गगनंदिशः ॥ सत्याइत्याद्यनुभवाःसदात

त्प्रतिपक्षगाः॥ अतोनिर्मानमखिलप्रमाणप्रतिपक्षगं ॥ दुर्मतंकोनुगृह्णीयाद्विनाऽसुरततिंक्वचित् ॥७॥ॐना
सतोदृष्टत्वात्ॐ ॥ ॥ अपरःशून्यमखिलंमनोवाचामगोचरं॥ निर्विशेषंस्वयंभातंनिर्लेपमजरामरं॥अशेषदो
षरहितमनंतंदेशकालतः॥ वस्तुतश्चतदस्मीतिनित्योपासापरोक्षितं ॥ रागादिदोषरहितंतद्भावंयोगिनंनये
त्॥ तस्यैवानादिसंवृत्यानानाभेदात्मकंजगत् ॥ सदिवाभातिसत्यत्वंसांवृतंतस्यचेष्यते॥पारमार्थिकसत्यत्वं
शून्यादन्यस्यनक्वचित्॥ सांवृतेनैवसत्त्वेनव्यवहारोखिलोभवेत् ॥ शून्यात्संवृतियोगेनविश्वमेतत्प्रवर्तते ॥ सृ
ष्टिकालेपुनश्चांतेस्तिमितंशून्यतांव्रजेत् ॥ इतिब्रूतेतमुद्दिश्यजगादजगतांगुरुः॥॥ ॐनासतोदृष्टत्वात्ॐ ॥
नासतोजगतोभावोनहिदृष्टासतोजनिः॥ सतःक्वचित्प्रमाणंचदृष्टिरेवाखिलाद्धरं॥॥ ॐउदासीनानामपिचै
वंसिद्धिःॐ॥॥ यद्येवंसप्तमरसान्मधुरादिवपीनता ॥ भवेज्जनस्यमार्जारश्रृंगंगोरिवघातकं ॥ कार्यार्थीकार
णंसच्चनोपादद्यात्कथंचन॥ नप्रवर्तेतचेष्टायशून्यादेवेष्टसंभवात्॥देशकालादिनियमोनहिशून्यात्सतोभवेत्॥
पुरुषेच्छानुसारेणयदिकिंचित्प्रजायते ॥ किंनानुमीयतेतद्वद्वस्तुत्वात्पुरुषोद्भवः ॥ सर्वस्यापि ॥ ॐनाभावउ
पलब्धेःॐ ॥ नचाभावोविश्वंसदितिगम्यते ॥ यतोनुभवरोधेतुवचनंवादिनःकुतः ॥ स्वप्नभ्रांतिवदेवेदंसंवृत्यै

वोपलभ्यते ॥ यदिसत्त्वेन ॥ ॥ ॐवैधर्म्याच्चनस्वप्नादिवत्ॐ ॥ ॥ किंचात्रभ्रमोनैवनिवर्तते ॥ अनादेरस्यवि
श्वस्यनिवृत्तिर्यदिचेष्यते ॥ निवृत्तिश्चनिवर्तेततस्याभ्रांतित्वसंभवात् ॥ दृष्टस्यभ्रांतिताचेत्स्याददृष्टेनभ्रमःकु
तः ॥ गवामश्रृंगिभावेननहिस्याच्छशश्रृंगिता ॥ अस्माकंतुप्रमाणेनप्रसादादीश्वरस्यच ॥ उक्तभंग्यागमानां
चप्रामाण्याद्युज्यतेऽखिलं ॥ दृश्यत्वाद्भिमतंमिथ्यास्वप्नवच्चेदियंचमा ॥ मिथ्याचेत्साध्यसिद्धिर्नव्यभिचारोन
चेद्भवेत् ॥ साधकत्वमसत्यस्यसाध्यंविप्रतिपत्तितः ॥ तस्यचेत्यनवस्थास्यात्सत्त्वंचास्यानुभूतितः ॥ अनुभूति
विरोधेनमिथ्यात्वेमानकाचन ॥ अतीतानागतौकालावपिनःसाक्षिगोचरौ ॥ तत्संबंधितयासत्त्वमपिदृष्टस्य
साक्षिगं ॥ दृढदृष्टंतुयद्दृष्टंदृष्टाभासस्ततोपरं ॥ भ्रांतेःसंवृतिसत्यस्यविशेषोव्यभिचारवान् ॥ तेनाप्यङ्गीकृतःस
म्यक्सनःसत्यत्वमेवहि ॥ विज्ञानाद्यभिचारोस्यकदाचित्स्यादितिप्रमा ॥ नैवदृष्टाप्रमासाचनभवेत्स्वविरोध
तः ॥ भेदोविशेष्यधर्म्यादिग्रहणापेक्षयायदि ॥ अन्योन्याश्रयताहेतोर्दुर्ग्राह्यइतियन्नतत् ॥ स्वरूपंवस्तुनोभे
दोयन्नतस्यग्रहेग्रहः ॥ अन्यथास्यामुनाभेदइतिवक्तुंनशक्यते ॥ अगृहीतोयदाभेदस्तदास्वस्मादितिग्रहः ॥ ॥ १९० ॥
स्यात्प्रतीतिविरोधाच्चनहिकश्चित्तथावदेत् ॥ धर्मित्वप्रतियोगित्वतद्भेदायुगपद्यदि ॥ विशेषणंविशेष्यंचत

द्भावश्चैवगृह्यते॥कोविरोधःस्वरूपेणगृहीतोभेदएवतु ॥ अस्यामुष्मादितिपुनर्विशेषेणैवगृह्यते ॥ किंचभेदः
कथंग्राह्यइतियःपरिपृच्छति ॥ धर्म्यादिभेदग्रहणात्तेनोक्तोन्योन्यसंश्रयः॥अन्यत्वाग्रहणेप्रोक्तःकथमन्योन्यसं
श्रयः ॥ अन्यत्वंयदिसिद्धंस्यात्कथमन्योन्यसंश्रयः ॥ एतादृशस्यवक्तारावुभौजात्युत्तराकरौ ॥ मायीमाध्य
मिकश्चैवतदुपेक्ष्यौबुभूषुभिः ॥ यच्छून्यवादिनःशून्यंतदेवब्रह्ममायिनः॥ नहिनक्षणभेदोस्तिनिर्विशेषत्वतस्त
योः॥अनृतादिविरोधित्वमुभयोश्चस्वलक्षणं॥स्ववाक्याभावसंवादान्नकृत्यंप्रतिवादिनः॥तत्पक्षइतिवैधर्म्यान्न
स्वप्नादिवदित्यजः ॥अप्रयत्नान्निराचक्रेचेतिदृष्टिविरुद्धतां ॥ निष्प्रमाणत्वमप्यस्यसूचयामासविश्वकृत् ॥ ८ ॥
॥ॐनभावोनुपलब्धेःॐ॥॥ ज्ञानमेवैकमखिलज्ञेयाकारंप्रभासते॥तत्रसंततिभेदश्चस्वभेदोभेदएवच ॥ कल्पि
ताःप्रतिभासंतेनानासंवृतिभूमिषु ॥ इत्येतदपिनोयुक्तंनहिज्ञानतयाजगत् ॥ भासतेनुभवस्यैवविरुद्धत्वादपे
शलं॥तन्मतं॥ॐक्षणिकत्वाच्चॐ ॥ क्षणिकत्वाच्चज्ञानस्यस्थिररूपतः ॥ज्ञेयस्योक्तप्रकारेण॥ ॥ ॐसर्वथानुप
पत्तेश्चॐ॥ ॥सर्वश्रुतिविरोधतः॥अनुभूतिविरुद्धत्वादपिपक्षाइमेऽशिवाः॥९॥ ॥ ॐनैकस्मिन्नसंभवात्ॐ॥
आहक्षपणकोविश्वंसदसद्द्वयमद्वयं॥ द्वयाद्वयमतत्सर्वंसप्तभंगिसदातनं ॥ नैतत्पदार्थएकस्मिन्युक्तंदृष्टिविरो

धतः॥भावाभावतयाविश्वंयेनरूपेणमीयते॥तद्रूपमेवतदितिनियमःकेनवार्यते॥तत्तद्दोषनिवृत्त्यर्थंस्वीकृतातत्तदात्मता ॥यदितैरखिलैर्दोषैर्लिप्यतेचलदर्शनः ॥ अतिहायप्रमाणाप्तनियमंसदसत्तया ॥ अशेषमाविरुद्धंच निर्मानंव्याहतंसदा॥सर्वप्रकारंवदतोदृष्टहानिरमग्रहः॥स्वव्याहतत्वमित्याद्यादोषाःसर्वेभवंतिहि ॥वक्तिस्वप्रभमात्मानंदेहमानं॥॥ॐएवंचात्माकार्त्स्न्यंॐ॥ ॥ॐनचपर्यायादप्यविरोधोविकारादिभ्यःॐ॥ ॥तदप्यलं॥ दृष्टंनानाशरीरेषुप्रवेशादन्यथाभवात्॥अन्यथाभावियद्वस्तुतदनित्यमितिस्थितिः॥ तन्मतेतदनित्यत्वंपुद्गलस्यानिवारितं ॥ नानित्यतास्मत्पक्षेतुचैतन्यादेर्विशेषिणः॥लक्षणस्यनिवृत्तौतुस्यान्नतच्चेतनेक्वचित् ॥ ओतप्रोतात्मकत्वंतुपटेदेहेंगसंस्थितिः॥इत्यादिलक्षणस्यैवनिवृत्तौस्यादनित्यता॥ भौतिकंत्वेवरूपादिव्याप्तंनाशेननोमते॥नैवंतस्यान्यथाभावोयस्यानित्यत्वमीरितं ॥ रूपादियुक्तस्यतथाजगन्नाशित्वसिद्धये ॥ व्याख्यातयान्यथाभावादात्मनोनित्यताभवेत् ॥ ॥ ॐअंत्यावस्थितेश्चोभयनित्यत्वादविशेषात्ॐ॥ ॥ नित्योर्ध्वगतिरप्येषायामुक्तिरितिकथ्यते॥अलोकाकाशमाप्तस्यकथंनविकृतिश्चसा ॥ कीदृशश्चान्यथाभावोनाशहेतुतयेष्यते ॥ ॥१९१॥
संस्थानापगमश्चेत्सनहिभूसागरादिषु॥यःकश्चिदन्यथाभावोयदिमुक्तिश्चतादृशी॥ देहमानेविकारस्स्यादि

तिस्थास्नूननात्मनः ॥ आहहस्त्यादिदेहेषुह्यपिस्यादन्यथाभवः ॥ अणुदेहस्यजीवस्यगजत्वेविकृतिर्हिया॥ दे
हव्याप्तौविशेषःकस्तस्याःस्थास्नुतनौचनुः॥गीतात्पुष्पफलावाप्तिःस्पर्शात्कार्श्यंरसात्स्थितिः। अपिवृक्षस्यदृश्यं
तद्इतिनानात्मताभवेत् ॥ एवंचात्माकात्स्न्र्यमितिततएवाहवेदवित् ॥१०॥ ॥ ॐपत्युरसामंजस्यात्ॐ॥॥ स
र्वज्ञत्वादिकैस्सर्वैर्गुणैर्युक्तंसदाशिवं ॥ जगद्विचित्ररचनाकर्तारंदोषवर्जितं ॥आहुःपाशुपतास्तच्चबहुश्रुतिवि
रोधतः॥नोपादेयंमतंह्यस्यदेवस्यस्तुहिगर्तगं ॥ उत्पिपेषशिरस्तस्यगृणीषेसत्पतिंपदं ॥ यद्विष्णोरुपमंहंतुंरुद्र
माकृष्यतेमया ॥धनुर्यंकामयेतंतमुग्रंमाशिश्नदेवताः ॥ ब्रंछिश्नदेवानेकोसावासीन्नारायणःपरः ॥ तस्माद्रुद्र
स्संप्रसादश्चाभूतांवैष्णवंमखं ॥ यज्ञेनयज्ञमयजंताबध्नन्पुरुषंपशुं ॥ योभूतानामधिपतीरुद्रस्तंतिचरोवृषा ॥इ
त्यादिश्रुतिसामर्थ्यात्पारतंत्र्यंजनिर्मृतिः॥ पराधीनपदप्राप्तिरज्ञत्वंप्रलयेभवः॥ प्रतीयंतेसदोषत्वान्नेशःपशुप
तिस्ततः॥ ॥ ॐसंबंधानुपपत्तेश्चॐ॥ ॥ अशरीरत्वतस्तस्यसंबंधोजगताक्वचित् ॥ कर्तृत्वेननयुज्येतदेहिनो
ज्ञानदृष्टितः॥ ॥ ॐकरणवच्चेन्नभोगादिभ्यःॐ ॥॥ नचदेहादिवद्विश्वमस्यस्याद्भोगसंभवात् ॥ ॥ॐअधिष्ठा
नानुपपत्तेश्चॐ ॥॥ अधिष्ठानेस्थितःकर्ताकार्यंकुर्वन्प्रतीयते ॥ नास्याधिष्ठानयोगोस्तिभूतानांप्रलयेतदा ॥

अनु
ध्यंगितां
॥ ३२॥



अदेहश्चेदसर्वज्ञः शिलाकाष्ठादिवत्सदा॥ देहीचेदंतवानेवयज्ञदत्तनिदर्शनात्॥नचैतदखिलंविष्णौश्रुतिप्रामा
ण्यगौरवात्॥मनोबुद्ध्यंगितांविष्णोर्लक्षयामोयएवसः॥ सएवदेहोविज्ञानमैश्वर्यंशक्तिरूर्जिता ॥ देहोविष्णो
र्नतेविष्णोवासुदेवोग्रतोभवेत्॥ एकोनारायणआसीन्नब्रह्मानचशंकरः॥ अजस्यनाभावध्येकमर्पितंमात्रया
परः॥ सद्देहस्सुखगंधश्चज्ञानभाःसत्पराक्रमः॥ज्ञानज्ञानःसुखसुखःसविष्णुःपरमोक्षरः॥ आनंदएकएवाग्रआ
सीन्नारायणःप्रभुः॥ प्रियंतस्यशिरोमोदप्रमोदौचभुजौहरेः॥आनंदोमध्यतोब्रह्मपुच्छंनान्यदभूत्कचित्॥मन
सोस्याभवद्ब्रह्मा ललाटादपिशंकरः॥ पक्षयोर्गरुडःशेषोमुखादासीत्सरस्वती ॥ सहस्रशीर्षापुरुषःसहस्राक्षःस
हस्रपात्॥ इत्यादिश्रुतिसंदर्भबलान्नित्यगुणात्मनः॥विष्णोर्देहाज्जगत्सर्वमाविरासीदितीयते॥मानवत्त्वाद्वि
रोधःकोनामानंक्कचिदिष्यते ॥ अविरोधोविरोधश्चमानेनैवहिगम्यते॥ अतउक्तंसमस्तंचवासुदेवस्ययुज्य
ते॥शिवादिनामयुक्ताश्चश्रुतयोविष्णुवाचकाः॥नामानिसर्वाणिचयमेकोयोदेवानामधाः॥विष्णुनामानिना
न्यस्यसर्वनामाहरिःस्वयं ॥ननारायणनामानितदन्येष्वपरेहरौ ॥इत्यादिश्रुतयस्तत्रमानंचोक्तःसमन्वयः॥ ॥१९२॥
पुराणानिपुराणाद्यैर्विरुद्धत्वान्नतत्प्रमा॥तद्विरुद्धेषुनोमानंपूर्वापरविरोधतः॥समब्राह्मविरोधाच्चनियमाद्वैष्ण

वेष्वपि ॥ मोहार्थमुक्तितश्चैवविष्णुरेकोगुणार्णवः ॥ स्कंदसूर्यगणेशादिमतानिन्यायतोमुतः ॥ निराकृतान्य
शेषेणसिद्धांतस्याविशेषतः ॥ ॥ ॐउत्पत्त्यसंभवात्ॐ ॥ ॥ निराकृतौविशेषस्यभावाच्छक्तिमतंपृथक् ॥ दूष्य
तेमहतीदेवीह्रींकारीसर्वकारणं ॥ त्रिपुराभैरवीत्यादिनामभिःसाभिधीयते ॥ तस्याःसदाशिवाद्याश्चजायंते
देवमानवाः॥भूतभौतिकमप्येतदिदितिन्नोपपद्यते ॥ दृष्टापुंभ्यःसदासृष्टिःस्त्रीपुंभ्योवाविशेषतः ॥ केवलाभ्यो
नहिस्त्रीभ्यस्ततउत्पत्त्यसंभवात् ॥ नार्च्यंमहावाममतंवामैरन्यैरुदीर्यते ॥ शिवोपसर्जनाशक्तिःससर्जेदंसमंत
तः॥ इतितच्चोपपन्नंन ॥ ॥ ॐनचकर्तुःकरणंॐ ॥ ॥ शिवस्याकरणत्वतः॥ अदेहत्वादपिह्यन्येब्रूयुःसर्वज्ञ
मीश्वरं ॥ अणुवामानतद्युक्तं ॥ ॥ ॐविज्ञानादिभावेवातदप्रतिषेधःॐ ॥ ॥ ईशवादप्रवेशनात् ॥सार्वज्ञा
दिर्गुणैर्युक्तंगुरुकल्पनयाद्वयं॥ नयुज्यतेततस्त्वीशएकएवप्रयोजकः॥उक्तदोषश्चतत्पक्षइतिनैवात्रदूष्यते ॥ ॥
ॐविप्रतिषेधाच्चॐ ॥ ॥ श्रुतिस्मृतीतिहासानांसामस्त्येनविरोधतः॥सतांजुगुप्सितत्वाच्चनांगीकार्यंहितन्म
तं॥पंचरात्रनिषेधार्थमेतान्याचक्षतेयदि॥सूत्राण्यतिविरुद्धंतद्यतआहसभारते॥ पंचरात्रस्यकृत्स्नस्यवक्ताना
रायणःस्वयं॥ज्ञानेष्वेतेषुराजेंद्रसर्वेष्वेतद्विशिष्यते ॥ पंचरात्रविदोयेतुयथाक्रमपरान्नृप ॥ एकांतभावोपगता

३३

वासुदेवंविशंतिते॥ इतिगीताचतच्छास्त्रसंक्षेपइतिहीरितं॥ वेदेनपंचरात्रेणभक्त्यायज्ञेनचैवहि॥ दृश्योहंना
न्यथादृश्योवर्षकोटिशतैरपि॥इतिवाराहवचनंश्लोकाइतिवचःश्रुतौ॥वेदैश्चपंचरात्रैश्चध्येयोनारायणःपरः॥
पंचरात्रंचवेदाश्चविद्यैकैवद्विधेयते॥ इत्यादिवेदवचनैःपंचरात्रमपोद्यते॥ कथमेवात्रदोषःक्वउत्पत्तिर्ज्ञोतइत्य
पि॥इहैवोक्तानचाभूतभावस्तत्रापिकथ्यते॥अनादिकर्मणाबद्धोजीवःसंसारमंडले॥वासुदेवेच्छयानित्यंभ्र
मतीतिहितद्वचः॥नहिसंसारसादित्वंपंचरात्रोदितंक्वचित्॥ जीवाभिमानिशेषस्यनाम्नासंकर्षणस्यतु ॥वा
सुदेवाज्जनिःप्रोक्ताप्रद्युम्नस्यततस्तथा॥ मनोभिमानिनःकामस्यैवंसाक्षाद्धरेःक्वचित्॥ संकर्षणादिनाम्नैवनि
त्याचिंत्योरुशक्तितः॥ व्यूहयुक्तोन्यथानूद्यकथंदुष्टत्वमुच्यते॥ यदिविद्याच्चतुर्वेदानितिवद्वेदपूरणं॥पंचरात्रा
दितिकुतोद्वेषःशांडिल्यवर्तने॥ अतःपरमशास्त्रोरुद्वेषादुदितमासुरैः॥ दूषणंपंचरात्रस्यवीक्षायामपिनक्षमं॥
अतोशेषजगद्धातानिर्दोषोरुगुणार्णवः॥ नारायणःश्रुतिगणतात्पर्यादवसीयते॥ अंधंतमःप्रविशंतियेत्ववि
द्यामुपासते॥ततोभूयइवायांतिएतस्यानैवनिंदकाः॥ ततोविद्यामविद्यांचयोजानात्युभयंसह॥ दोषज्ञाना ॥१९३॥
दतीत्यैतांविद्ययामृतमश्नुते॥१२॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्याने

द्वितीयाध्यायस्यद्वितीयःपादः ॥ २ ॥ २ ॥ ॥ ॥ ॥ ॥

ॐ॥अथाशेषसमाम्नायविरोधापाकृतिंप्रभुः ॥ करिष्यन्नधिदैवाधिभूतजीवपरात्मनां ॥ स्वरूपनिर्णयायैवव
चनानांपरस्परं ॥ पादेनानेनाविरोधंदर्शयत्यमितद्युतिः ॥ अनुभूतियुक्तिबहुवाग्वैलोम्यंचततोधिकं ॥ एत
त्सर्वंततःसाम्यंद्वारवैयर्थ्यमेवच ॥ दृष्टयुक्त्यनुसारित्वमुक्तान्यार्थाविरोधतः ॥ प्रसिद्धनामस्वीकारेबहुवा
क्यानुवर्तिता ॥ लोकदृष्टानुसारित्वंजीवसाम्यमनादिता ॥ तत्रतत्रपरिज्ञानंगुणसाम्यश्रुतीतथा ॥ उत्पत्तिम
त्त्वंस्वगुणाननुभूत्यल्पकल्पने ॥ नानाश्रुतिश्चवैचित्र्यंयुक्तयःपूर्वपक्षगाः ॥व्यवस्थानुपपत्तिश्चस्वातंत्र्यमनुसा
रिता ॥ मुख्यताशक्तिमत्त्वंचवैरूप्यंसर्वसंग्रहः ॥ गत्यादिरीशशक्तिश्चसर्वमानविरोधिता ॥ अभीष्टासिद्धिसु
व्यक्तीशास्त्रसिद्धिर्विपर्ययः ॥ विशेषकारणंचेतिसिद्धांतस्यैवसाधिकाः ॥ ॥ ॐनवियदश्रुतेःॐ ॥ ॥ प्रकृतिः
पुरुषःकालोवेदास्तदभिमानिनः ॥ महदाद्याश्चजायंतेपराधीनविशेषिता ॥ इदंसर्वंससर्जेतिजनिमत्त्वमिहो
दितं ॥ अवकाशमात्रमाकाशःकथमुत्पद्यतेन्यथा॥यद्यनाकाशतापूर्वंकिंमूर्तंनिबिडंजगत् ॥ मूर्तसंपूर्णताचै
वयद्यनाकाशताभवेत् ॥ मूर्तद्रव्याणिचाकाशेस्थितान्येवहिसर्वदा ॥ अतआकाशशब्दोक्तस्तद्देवोत्रविनाय

कः ॥देहोत्पत्त्यासमुत्पन्नइतिश्रुत्याभिधीयते ॥ भूतमप्यसितंदिव्यदृष्टिगोचरमेवतु ॥ उत्पद्यतेव्याकृतंहिगग
नंसाक्षिगोचरं॥प्रदेशइतिविज्ञेयंनित्यंनोत्पद्यतेहितत् ॥ तथापिमूर्तसंबंधपरतंत्रविशेषयुक् ॥ खमेवोत्पत्तिम
न्नामश्रुतिशब्दविवक्षितं ॥ प्रकृतिःपुरुषःकालइत्येतेचसमस्तशः ॥ ईशाधीनविशेषेणजन्याइत्येवशब्दिताः ॥
कालप्रवाहएवैकोनित्योनतुविशेषवान् ॥ पुरुषाव्यक्तकालानांरमैवैकाभिमानिनी॥ सिसृक्षुत्वविशेषंतत्साक्षा
द्भगवदिच्छया ॥ प्राप्तैवसृष्टेत्युदिताप्रधानंविकृतेरपि ॥ पुमांसोदेहसंबंधात्सृष्टिमंतइतीरिताः॥ १ ॥ ॥ ॐए
तेनमातरिश्वाव्याख्यातःॐ ॥ ॥ एवंप्रलयकालेपिप्रतिभातपरावरः ॥ मुख्यवायुर्नित्यसमःशरीरोत्पत्तिकार
णात् ॥ पराधीनविशेषेणजनिमानेवशब्दितः ॥ नैवकिंचित्ततोजन्मवर्जितंपरमादृते ॥ पराधीनविशेषत्वेज
न्मनःस्थूलताभवः ॥पूर्वशब्दविलोपश्चयदिजन्मेतिकीर्त्यते ॥रमायानैवजन्मास्तिचैतन्यस्यापिकेवलं॥प्रधा
नस्यचवेदस्यवेदस्यापीश्वरेच्छया ॥ व्यक्तिर्नामविशेषोस्तितस्मात्तद्दशतैवहि ॥ उत्पत्तिरत्रकथिता ॥२॥॥ ॐ
असंभवस्तुसतोनुपपत्तेःॐ ॥ ॥ स्वतंत्रत्वात्परात्मनः ॥ नैवोत्पत्तिःकथमपिनस्वतंत्रंततोपरं ॥ ३ ॥ ॥ ॐ
व्यतिरेकोगंधवत्तथाचदर्शयतिॐ ॥॥ अच्छेद्यस्यापिजीवस्यविभागंबहुधाहरिः ॥कृत्वाभोगान्प्रदायैवचैक्य

मापादयेत्पुनः ॥ अतईशवशंसर्वंचेतनाचेतनंजगत् ॥ अविभागंविभागाययदानयतिकेशवः ॥ किमशक्यं
परेशस्यतदेवह्यभिधीयते ॥ १३ ॥ ॥ ॐपृथगुपदेशात्ॐ ॥ ॥ एवंस्थितेपिजीवैक्यंकेचिदाहुःपरात्मना ॥
तद्योहमितिपूर्वाभिःश्रुतिभिश्चानुमाबलात् ॥ नतद्युक्तंयतोविष्णुःपृथगेवाभिधीयते ॥ प्रज्ञानेत्रोलोकइतिमु
क्तौभेदोभिधीयते॥एतमानंदमित्यन्यापरमंसाम्यमित्यपि॥ इदंज्ञानमपाश्रित्यममसाधर्म्यमागताः । सर्गेपि
नोपजायंतेप्रलयेनव्यथंतिच ॥ उपसंपद्यतेज्योतिःस्वरूपेणाभिपद्यते ॥ तत्रपर्येतिजक्षंश्चक्रीडन्नपिसदासु
खी॥आचक्ष्वमेपरंमोक्षंधीरायंप्रवदंतितं॥ इत्युक्तआहवाग्देवीपरंमोक्षंप्रजापतेः॥ शाखांशाखांमहानद्यःसं
यांतिपरितःस्रवाः॥धानापूपामांसकामाःसदापायसकर्दमाः॥यस्मिन्नभिमुखादेवाःसेंद्राःसहमरुद्गणाः॥ ईजि
रेक्रतुभिःश्रेष्ठैस्तदक्षरमुपासते ॥ प्रविशंतिपरंदेवंमुक्तास्तत्रैवभोगिनः । निर्गच्छंतियथाकामंपरेशेनैवचोदि
ताः॥भेददृष्ट्याभिमानेननिःसंगेनापिकर्मणा॥ कर्तृत्वात्सगुणंब्रह्मपुरुषंपुरुषर्षभं॥ ससंगत्यपुनःकालेकालेने
श्वरमूर्तिना ॥ जातेगुणव्यतिकरेयथापूर्वंप्रजायते ॥ ऋचांत्वःपोषमास्तेचपरेणप्रेरिताःसदा॥ यत्कामस्तत्सृज
त्यद्धैवात्मनातत्सृजत्यपि॥सहैवब्रह्मणाकामान्भुंक्तेनिस्तीर्णतद्गुणः ॥ दुःखादींश्चपरित्यज्यजगद्व्यापारवर्जि

तः॥भुंक्तेभोगान्सदैवोच्चानित्याद्यागममानतः॥ मुक्तस्यभेदावगतेःकथमेवह्यभिन्नता ॥ जीवेशयोर्नानुमाच
तदभेदंप्रमापयेत् ॥मिथ्यैवभेदोविमतोभेदत्वाच्चंद्रभेदवत्॥इतिचेत्साध्यधर्मोयंसन्नसन्वानवोभयं॥ यदिसन्न
पसिद्धांतःसएवासन्निति‌ीरिते॥नोभयंचेन्नसिद्धंतदितिमानस्यदूषणं ॥ नचमानांतरेणैतच्छक्यंसाधयितुंक्वचि
त्॥ अनुमानेनचेत्सैवह्यनवस्थाभविष्यति॥नचागमस्तदर्थोस्तिनासदासीन्नतद्वदेत्॥परिशेषादनिर्वाच्यंयदि
सिध्येत्परात्मनः॥अनिर्वाच्यत्वमेवस्यात्परिशिष्टोह्यसौतदा॥ नचान्यआगमस्तत्रसदसत्प्रतियोगिनि॥ नचप्र
त्यक्षमत्रास्तिनचार्थापत्तिरिष्यते॥बाधायोगात्सतइतिबाधाभावतएवहि ॥इष्टापत्तिर्नहिभ्रांतावपिबाधोवग
म्यते॥विषयस्यकुतोबाधोविद्यमानंहिबाध्यते॥नहिवंध्यासुतोबाध्योयज्ञदत्तोहिबाध्यते॥ बाधायोगात्सतइ
तिव्याप्तिरेषाक्वदृश्यते॥कश्चायंबाधउद्दिष्टोनहिनाशोसतोभवेत्॥निवृत्तिश्चाप्रवृत्तस्यकथमेवोपपद्यते ॥ नासी
दस्तिभविष्यच्चतदितिज्ञानमेयता ॥ यदिबाधस्तदासत्त्वंतेनैवांगीकृतंपुनः ॥ प्रतीतिर्नासतइतिवदन्नंगीकरो
तितां॥निषेधोह्यप्रतीतस्यकथंचिन्नोपपद्यते॥नचोपमाभवेदत्रप्रत्यक्षात्सत्त्वमेवच ॥ शास्त्रगम्यपरेशानाद्भेदः
स्वात्मनईयते ॥ अनुभूतिविरोधेनकथमेकत्वमुच्यते॥किंचित्कर्ताचदुःखीतिसर्वैरेवानुभूयते॥ सर्वज्ञोभगवा

न्विष्णुः सर्वशक्तिरिति श्रुतः ॥ अनुभूताद्धि भेदेन श्रुतिरेषावदत्यमुं ॥ उपजीव्यविरुद्धंतु कथमैक्यंश्रुतिर्वदेत् ॥
अप्रामाण्यंयदा भेदवाचकस्य भविष्यति ॥ सएवधर्मिणोग्राहीतदभेदःकथंभवेत् ॥ यत्स्वरूपग्रहेमानंतद्धर्मेन
कथंभवेत् ॥ एकविज्ञानविज्ञस्याद्ध्यंमानंभविष्यति ॥ नचेदेकंप्रमाणंतद्द्वयमप्यत्रनोभवेत् ॥ धर्मिग्राहिविरो
धस्तुतस्मान्मानस्यदूषणं॥नोपजीव्योह्यभेदोत्रक्वचिद्भेदश्रुतेर्बलात्॥नचमानांतरोपेयंब्रह्मतद्भवतिक्वचित् ॥
येनमानेनचोपेयंभेदस्तेनावगम्यते ॥ सर्वज्ञानुमयैवेशोयद्युपेयःकथंचन ॥ सर्वज्ञत्वगुणेनैवतयाभेदोवगम्यते
॥नदुःखानुभवःक्वापिमिथ्यानुभवतांव्रजेत्॥नहिबाधःक्वचिद्दृष्टोदुःखाद्यनुभवस्यतु ॥यदिदुःखानुभूतिश्चभ्रां
तिरित्यवसीयते॥ अदुःखिताश्रुतिःकेननभ्रांतिरितिगम्यते॥श्रुतिस्वरूपमर्थश्चमानेनैवावसीयते ॥ तच्चेन्मा
नंगृहीतंतेकिंदुःखानुभवेभ्रमः॥ नचबाधविशेषोस्तियदबाधितमेवतत्॥ बाधोयद्यनुभूतेर्थैकथंनिर्णयईयते॥
कोपिह्यर्थोननिश्चेतुंशक्यतेभ्रमवादिना ॥ भ्रमत्वमभ्रमत्वंचयदैवानुभवोपगं ॥ एकस्यभ्रमतातत्रपरस्याभ्रम
ताकुतः ॥ भ्रमत्वमभ्रमत्वंचसर्ववेद्यंहिसाक्षिणा ॥ सचेत्साक्षीक्वचिद्दुष्टःकथंनिर्णयईयते ॥ विशेषाःसर्वएवैते
साक्षिप्रत्यक्षगोचराः ॥ ऊरीकृत्यचतान्सर्वान्व्यवहारःप्रवर्तते॥साक्षिणोव्यवसायीतुव्यवहारोभिधीयते॥ त

अनु स्मात्सर्वप्रसिद्धस्यव्यवहारस्यसिद्धये॥साक्षीनिर्दोषएवैकस्सदांगीकार्यएवनः॥ शुद्धःसाक्षीयदासिद्धोदुःखि व्याख्या.
॥ ३६ ॥ त्वंवार्यतेकथं॥उपजीव्यप्रमाणंतद्भेदग्राहकमेवहि॥ अतोजीवेशयोर्भेदःश्रुतिसामर्थ्यसुस्थिरः॥ ॥ ॐतद्गु २। ३
णसारत्वात्तद्व्यपदेशःप्राज्ञवत्ॐ॥ ॥ तथापितुचिदानंदपूर्वास्तत्सदृशागुणाः॥ सारस्वरूपमस्यापिमुक्ताव
प्यवशिष्यते॥अतोभेदवदेवैताःश्रुतयःप्रवदंतिहि॥पौराणानिचवाक्यानिसादृश्याभेदसंश्रयात्॥ सादृश्या
च्चप्रधानत्वात्स्वातंत्र्यादपिचाभिदां॥ आहुरीशेनजीवस्यनस्वरूपाभिदांक्वचित्॥ स्थानैक्यमैकमत्यंचमुक्त
स्यतुविशिष्यते॥ सादृश्यंचविशेषेणजडानांद्वयमेवतु॥ भवेत्सादृश्यमत्यल्पंतृतीयंपरमात्मना॥ ईशरूपक्रि
याणांचगुणानामपिसर्वशः॥तथैवावयवानांतत्स्वरूपैक्यंतुमुख्यतः॥ यथोदकंदुर्गेवृष्टंपर्वतेषुविधावति॥ ए
वंधर्मान्पृथक्पश्यंस्तानेवानुविधावति॥इतिश्रुतेर्नोभयंचभेदाभेदाख्यमिष्यते॥एकमेवाद्वितीयंतन्नेहनाना
स्तिकिंचन॥ मृत्योःसमृत्युमाप्नोतियइहनानेवपश्यति॥ इतिश्रुताविवेत्यस्माद्भेदाभेदनिराकृतिः॥इवोभये
चसादृश्यइतिवाक्शब्दनिर्णये॥१४॥ ॥ॐअंशोनानाव्यपदेशादन्यथाचापिदाशकितवादित्वमधीयतए ॥१९६॥
केॐ॥ ॥ भेदस्यमुक्तौवचनादपितत्पक्षनिग्रहः॥ चेतनत्वादिसादृश्यंयद्यभेदइतीष्यते॥ अंगीकृतंतदस्मा

भिर्नस्वरूपैकताक्वचित्॥नकेनचिद्भेदोस्तिभेदाभेदोपिवाक्वचित्॥समुदायमृतेविष्णोःस्वगुणादीन्विनापि
वा॥इतिश्रुतेर्नतस्यास्तिभेदाभेदोपिकेनचित्॥ अभेदश्रुतयोंशत्वात्सादृश्यंचांशतास्यतु॥ अंशस्तुद्विविधो
ज्ञेयःस्वरूपांशोन्यएवच॥ विभिन्नांशोल्पशक्तिःस्यात्किंचित्सादृश्यमात्रयुक्॥अंशिनोयत्तुसामर्थ्यंयत्स्वरूपं
यथास्थितिः॥ सएवचेत्स्वरूपांशःप्रादुर्भावाहरेर्यथा॥ सूर्यमंडलमान्येकस्तत्प्रकाशाभिमानवान्॥ सूर्योथ
सप्तमाब्धेश्चबाह्योदस्यचवारिपः॥ कठिणत्वेनमेर्वादेःपृथिव्याअपिदेवता॥धरादेव्येवमेवैकोभगवान्विष्णुरव्य
यः॥ नानावताररूपेणस्थितःपूर्णगुणःसदा ॥ विण्मूत्राद्यभिमानिन्योयथापभ्रष्टदेवताः॥ सूर्यादिभ्यस्तथै
वायंसंसारीपरमात्पृथक्॥॥ ॐअनुज्ञापरिहारौदेहसंबंधाज्ज्योतिरादिवत्ॐ॥ देहदोषैश्चदुष्टत्वादपभ्रष्टाख्य
देवताः॥ अन्यास्सूर्यादिदेवेभ्योह्यनुग्राह्याश्चतैस्सदा॥ एवमेवपराद्विष्णोःपृथक्संसारिणोमताः॥अनुग्राह्या
श्चतेनैवतत्प्रसादाच्चमोक्षिणः॥नतुमत्स्यादिरूपाणामनुग्राह्यत्वमिष्यते॥॥ ॐअसंततेश्चाव्यतिकरःॐ॥॥
गुणैरशेषैःपूर्णत्वान्मुख्याभेदोपरैर्नच॥॥ ॐआभासएवचॐ॥ ॥ अंशाभासाश्चसर्वेपिपरस्यांशानमुख्य
तः॥ यथैषापुरुषेच्छायाएतस्मिन्नेतदाततं॥ नतुपुंपादवत्पादाजीवाएतेपरात्मनः॥ पूर्णास्तस्यगुणाएवप्रादु

र्भावतयास्थिताः॥एवंजगादपरमाश्रुतिर्नारायणंपरं॥अक्षयोभगवान्विष्णुर्लक्ष्म्यावासोलयेस्थितः ॥ मुक्तैस्सदाचिंत्यमानोब्रह्माद्यैस्तारतम्यगैः ॥ प्रकृतिःपुरुषःकालोवेदाश्चेतिचतुष्टयं॥ नित्यंस्वरूपतोविष्णोर्विशेषावाप्तिमात्रतः॥ उत्पत्तिमदितिप्रोक्तंलक्ष्मीस्तदभिमानिनी ॥ ततोजातःपुमान्नामब्रह्मास्यांवासुदेवतः॥ सूत्रात्माप्राणनामाचदेव्यौप्रकृतिमानिनी ॥ ततोरूपंमहन्नामब्रह्मणोहंकृतिःशिवः ॥ ब्रह्मणोबुद्धिनाम्नोमाततइंद्रोमनोभिधः॥स्कंदश्चततएवान्येसर्वेदेवाःप्रजज्ञिरे॥तत्रपूर्वतनःश्रेयान्गुणैस्सर्वैस्समस्तशः॥तेभ्यश्चभगवान्विष्णुस्तदधीनाइमेसदा ॥जन्मस्थितिलयाज्ञाननियतिज्ञानसंसृतिः॥ मोक्षश्चतदधीनत्वमेतेषांनैवहीयते ॥ मुक्तावपिसएवैकःस्वतंत्रःपूर्णसद्गुणः ॥इतिश्रुत्युपपत्तिभ्यांपादेस्मिन्प्रभुणोदितं॥ १८ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेद्वितीयाध्यायस्यतृतीयःपादः ॥ २ ॥ ३ ॥

श्रुत्यर्थःश्रुतियुक्तिभ्यांविरुद्धइवदृश्यते ॥ यत्रतन्निर्णयंदेवस्सुविशिष्टोपपत्तिभिः ॥ करोत्यनेनपादेनतत्रस्पष्टार्थवच्छ्रुतिः ॥ विशेषश्रुतिवैरूप्यंमाहात्म्यंव्यक्तसद्गुणः ॥ दृष्टायुक्तिःसमानत्वंकर्तृशक्तिर्विमिश्रिता ॥ युक्तयःपूर्वपक्षेषुसुनिर्णीतास्तुतादृशाः॥ युक्तयोनिर्णयस्यैवस्वयंभगवतोदिताः ॥ इतिश्रीमदानंदतीर्थभगवत्पा

दाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेद्वितीयाध्यायस्यचतुर्थःपादः ॥ २ ॥ ४ ॥ अध्यायश्चायंसंपूर्णः ॥
श्रीमद्धयग्रीवार्पणमस्तु ॥ ॥ ॥ ॥ ॥
श्रीगुरुभ्योनमः ॥ ॐ ॥ स्वाभाविकान्यथानामसहभावान्यथोक्तयः॥ अविशेषविशेषौचसहभावोविमिश्र
ता ॥ निरुद्धोक्तिःसहस्थानंवैयर्थ्यंचान्यथागतिः ॥ युक्तयःपूर्वपक्षस्यगुणाधिक्यार्थतोभवौ ॥ उपपत्ति
र्द्विरूपत्वमाधिक्यमनुरूपता ॥ योग्यताबलवत्त्वंचविभागःकारणाभवः ॥ क्लृप्तिरन्यागतीश्चैवसिद्धांतस्यै
वसाधकाः ॥ ॥ ॐयोनेःशरीरंॐ ॥ ॥ बीजपूरुषयोनीनांसंगातिनियमोज्झितिं ॥ अथशब्देनभगवाना
हकारणतश्चतां ॥ २० ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेतृतीया
ध्यायस्यप्रथमःपादः ॥ ३ ॥ १ ॥ ॥ ॥ ॥ ॥
पश्चाददृष्ट्यविज्ञानकालदुःखपृथग्भवाःस्थानभेदोविरुद्धत्वंन्यायसाम्यंस्वतोभवः।गुणसाम्यमयोगश्चतर्कबा
धोविलोमता॥ नानाभावःप्रलोभश्चयुक्तयःपूर्वपक्षगाः ॥ अशक्यकर्तृताशक्तिःस्वतोबोधस्तथैवच॥ अमान
क्लृप्तिसन्मानव्यवस्थात्यल्पताभवाः ॥ विशेषदृष्टिवाक्येचपुंशक्तिःसुनिदर्शनं ॥ अलौकिकत्वमाधिक्यंस्वातं

अनु ॥३८॥ त्र्यंनिर्णयप्रमाः ॥ ॥ ॐसंध्येसृष्टिराहहिॐ ॥ ॥ ॐनिर्मातारंचैकेपुत्रादयश्चॐ ॥ ॥ ॐमायामात्रंतुका व्याख्या. ३।२
त्स्न्र्येनानभिव्यक्तस्वरूपत्वात्ॐ ॥ ॥ वासनासर्ववस्तूनामनाद्यनुभवागताः ॥ संत्येवाशेषजीवानामनादिम
नसिस्थिताः ॥ त्रिगुणात्मकंमनोस्त्येवयावन्मुक्तिस्सदातनं ॥ तत्रैवाशेषसंस्काराःसंचीयंतेसदैवच ॥ सूक्ष्मत्वे
नलयेसत्त्वप्राकृतैरुपचीयते ॥ सृष्टिकालेयदातन्नकुतःसंसारसंस्थितिः ॥ संस्कारैर्भगवानेवसृष्ट्वानानाविधंजग
त् ॥ स्वप्नकालेदर्शयतिभ्रांतिर्जाग्रत्त्वमेवहि ॥ अदृष्टेचाश्रुतेभावेनभावउपजायते ॥ अदृष्टादश्रुताद्भावान्नभा
वउपजायते ॥ इतिश्रुतिपुराणोक्तिरनादित्वात्तुयुज्यते ॥ कदाचिद्दर्शनायोग्यंयत्तत्रापिविभागतः ॥ दृष्टंस
माधिकरणंदृश्यतेत्रसचभ्रमः ॥ वासनामात्रमूलत्वाज्जाग्रद्वत्स्पष्टतानच ॥ भेदोऽभेदोऽथवाद्वंद्वमितिप्रश्नोनयु
ज्यते ॥ द्रष्टुःस्वप्नस्यदृष्टत्वाद्भेदस्यैवाखिलैर्जनैः ॥ प्रश्नदोषाहिचत्वारःस्वव्याहतिरसंगतिः ॥ सिद्धार्थताचवैफल्यं
नतैःस्यात्तत्त्वनिर्णयः ॥ तत्त्वनिर्णयवैलोम्यंस्याद्वादेपिहिनिग्रहः ॥ उद्भावनीयमेवस्यान्नकथावसितिर्भवेत् ॥
विजिगीषुकथायांतुकथावसितिकारणं ॥ परिहारेपिसिद्धत्वंदूषणंप्रतिवादिनः ॥ प्रतिज्ञायांतदन्यस्यसिद्धतै ॥१९८॥
वहिसाधिका ॥ आश्रयव्याश्रयासिद्धीसाध्यासिद्धिश्चदूषणं ॥ केषांचिन्नचतेदोषाव्याप्तौसत्यांकथंचन ॥ दोषो

व्याहतिरेवास्तिनृश्रृंगास्तित्वसाधने ॥ यत्रव्याहततानास्तिकोतिसंगोस्यसाधने ॥ प्रत्यक्षागममूलास्तुन्याया
स्सर्वेभवंतिहि॥न्यायाभासाअमूलास्युर्न्यायस्यान्यस्यतौपुनः॥ अदृष्टेव्यभिचारेतुसाधकंतदितिस्फुटं ॥ ज्ञाय
तेसाक्षिणैवाद्धामानबाधेनतद्भवेत्॥यत्साक्षिणैवमानत्वंमानानामवसीयते॥अमानस्यतुमानत्वंमानसत्वाच्च
लंभवेत् ॥ उत्सर्गतोपियत्प्राप्तमपवादविवर्जितं ॥ व्यभिचार्यपवादेनमानमेवभविष्यति ॥ अतोहिभोजनादी
नामिष्टसाधनतानुमा॥ मानंव्यवहृतौनित्यंव्यभिचारोहितत्रच ॥ व्याप्तत्वेव्याश्रयत्वंतुकथमेवहिदूषणं ॥ रोहि
ण्युदयआसन्नःकृत्तिकाभ्युदितायतः॥ इत्युक्तेसाधनंनोकिंनह्याज्ञैवात्रसाधिका॥ अन्यत्सदसतोर्विश्वमितिच
व्याहतेरमा ॥ असिद्धसाधनेदोषःकोव्याप्तिर्यदिविद्यते॥व्याप्तिश्चव्यतिरेकेणतत्रतैश्चावगम्यते ॥ अप्रसिद्धस्य
साध्यस्यसाधकत्वंयदेष्यते॥लिंगस्योक्तौविशेषोयंकेनमानेनगम्यते ॥ साधनंपरमाण्वादेर्यद्यसिद्धस्यचेष्यते
॥यथानुभवमेवैतन्नांगीकार्यंकुतस्तदा॥यत्रनातिप्रसंगोस्तिमानंनचविपर्यये ॥ क्लिष्टकल्पनयैवात्रसाध्यमित्य
तिदुर्वचः॥परिशेषोमिथस्सिद्धिश्चक्रकस्वाश्रयादयः ॥ असिद्धसाधकत्वेनपंचावयवतांविना ॥ अंगीकार्याः
समस्तैस्तन्नियमःकिंनिबंधनः॥सिद्धसाधनतायांचनकथावसतिर्भवेत्॥व्यभिचारोहेत्वसिद्धिरेकपक्षेपिदूषणं

॥साध्यसाधनवैकल्यंदृष्टांतस्यविशेषणे॥वैयर्थ्यमेकासिद्धौचविशिष्टासिद्धिरेवहि ॥अप्रयोजनतातत्रप्रथमप्र
श्नदूषणं॥सिद्धप्रश्नादिकंयत्तदाधिक्यांतर्गतंभवेत्॥ अर्थापत्त्युपमाभावाअनुमांतर्गताःक्वचित् ॥ प्रत्यक्षांतर्ग
तोभावःसुखादेर्नियमेनच ॥ अन्यत्रझटितिप्राप्तःप्रारंभाद्याश्चयुक्तयः ॥ आगमार्थावसित्यर्थानियतव्याप्तयो
खिलाः॥वाक्यंप्रकरणंस्थानंसमाख्याचतथाविधाः॥कुरुपांडववत्तेषामुपपत्तेःपृथग्वचः ॥ स्वन्यायैःसाधनंका
र्यंपरन्यायैस्तुदूषणं॥स्वन्यायैर्दूषणंचस्यात्साधितैःप्रतिवादिनः ॥प्रसंगार्थतयाप्रोक्तानसिद्धांतस्यदूषकाः ॥ छ
लंजातिरितिद्वेधाव्याहत्यंतरमिष्यते। जातिःस्वव्याहतिर्ज्ञेयाछलमर्थांतरोत्तरं।एवंसंशोधितन्यायसदागमवि
रोधतः॥नानिर्वाच्यमिहप्रोक्तंमायामात्रपदेनहि॥विलक्षणंसदसदोरितिहिव्याहतंस्वतः ॥ प्रतियोगित्वमप्य
स्यब्रह्मणोंगीकृतंभवेत्॥मिथ्याचेत्प्रतियोगित्वंवैलक्षण्यंततोनहि। अविलक्षणत्वंसत्यंस्यान्मिथ्यात्वंब्रह्मणस्त
तः॥ अनिर्वाच्यस्यसत्त्वंवायदिधर्मानकेचन ॥ ब्रह्मणोनैवजिज्ञास्यंजिज्ञासाधर्मनिर्णयः॥ इदमित्थमितिज्ञानं
जिज्ञासायाःप्रयोजनं॥इत्थंभावोहिधर्मोस्यनचेन्नप्रतियोगिता॥इत्थंभावात्मकान्धर्मानाहुश्चश्रुतयोखिलाः॥ ॥१९९॥
अदृश्यत्वादयोप्यस्यगुणाहिप्रभुणोदिताः ॥ यदिस्युस्तादृशाधर्माःसर्वज्ञत्वादयोनकिं ॥ अन्यापेक्षायदिस्यु

ष्टेसत्त्वैवंदेशकालगा ॥ देशकालानपेक्षाहिनसत्ताक्कापिदृश्यते ॥ सर्वधर्मोज्झितस्यास्यकिंशास्त्रेणाधिगम्य
ते ॥ मिथ्याधर्मविधातुश्चवेदस्यैवाप्रमाणता ॥ अप्राप्तांभ्रांतिमापाद्यकिंवेदोमानतांव्रजेत् ॥ नहिवेदंविनाब्र
ह्मवेद्यंधर्माश्चतद्गताः ॥ वेदवेद्यस्यमिथ्यात्वंयदिनैक्यस्यतत्कथं ॥ धर्मारोपोपिसामान्यधर्मादीनांहिदर्शने ॥
इदंतदादिधर्मित्वेधर्मोन्यःकल्प्यतेत्रहि ॥ सर्वधर्मविहीनस्यधर्मारोपःक्कदृश्यते॥तदर्थंयदिधर्माणामारोपःसा
नवस्थितिः ॥ ईशतज्ज्ञानवेदाक्षजानुमामातृपूर्विणः ॥ भ्रांतिर्विश्वस्ययेनैवमानाभासेनकल्प्यते ॥ तन्मा
त्रस्यान्यथाभावेकिंनस्याद्विश्वसत्यता ॥ येनेदंकल्प्यतेभ्रांतंभ्रांतिस्तस्यैवकिंनसा॥ भ्रांतत्वेतस्यविश्वारेरीशा
द्यभ्रांतमेवहि ॥ भवेयुर्भ्रांतयोनॄणांनैवेशादेःकथंचन ॥ सत्यत्वमक्षजंप्राप्तंयदिभ्रांतमितीष्यते॥ प्रामाण्यमाग
मस्यापिप्रत्यक्षादन्यतःकुतः ॥ साक्षिप्रत्यक्षतोह्येवमानानांमानतेयते ॥ साक्षिणःस्वप्रकाशत्वमनवस्थाततो
नहि ॥ तात्कालिकंप्रमाणत्वमक्षजस्ययदाभवेत् ॥ ऐक्यागमस्यकिंनस्यात्तस्याप्येतादृशंयदि ॥ ऐक्यप्रमाण
मिथ्यात्वंयदाविश्वस्यसत्यता ॥ ऐक्यवाक्यस्यमानत्वंयद्यबाध्यमितीष्यते॥अक्षजस्यापिमानत्वंनाबाध्यंकि
मितीष्यते ॥ अद्वैतहानिसामान्यान्नविशेषश्चकश्चन ॥ यदिस्वतस्त्वंप्रामाण्येविश्वसत्ताकथंनते ॥प्रामाण्यस्य

चमर्यादाकालतोऽन्याहताभवेत् ॥ कालांतरेप्यमानंचेदिदानींमानताकुतः ॥ मिथ्यात्वमानंमोक्षेऽपिमानं
किंनेतिभण्यतां ॥ मानत्वेद्वैतहानिःस्यादमानत्वेप्यमोक्षता ॥ विश्वस्यपुनरापत्तिर्मिथ्यामानंयदानमा ॥ अ
स्तिचेन्मुक्त्यवस्थाचद्वैतापत्तिरतोन्यथा ॥ अमुक्तत्वंतथाकालेकालाधीनाहिमुक्तता॥कालएवागमोप्याहमु
क्तिकालनिवर्तने ॥ मुक्तेरपिनिवृत्तिःस्यात्संसारित्वमतोभवेत्॥क्वचप्रत्यक्षतःप्राप्तमनुमागमबाधितं॥ देहात्म
त्वंयदिनतत्प्राप्तंप्रत्यक्षतःक्वचित्॥ममदेहइतिह्येवनदेहोहमितिप्रमा ॥ उपचारश्चकृष्णोहमितिकर्दमलेपने ॥
वस्त्रस्ययद्वदेवंस्याद्यद्युपाधिकृतंतदा ॥ स्वतःशुक्लत्ववत्कार्ष्ण्यंनममेतिप्रतीयते॥ कथंचभेदोदेहादेरात्मनोन
प्रतीयते ॥ जातमात्रामृगागावोहस्तिनःपक्षिणोझषाः ॥ भयाभयस्वभोगादौकारणानिविजानते ॥ अस्मृ
तौपूर्वदेहस्यविज्ञानंतत्कथंभवेत् ॥ अन्वयव्यतिरेकादेरनुसंधानविस्मृतौ ॥यदादेहांतरज्ञानंदेहैक्यावसितिः
कुतः ॥ व्याप्तत्वादात्मनोदेहेव्यवहारेष्वपाटवात् ॥ भेदज्ञानेपिचांगारवह्निवत्स्वाविविक्तवत् ॥ भवंतिव्यवहा
राश्चनहिप्रत्यक्षगानपि ॥ अर्थान्यथानुभवतःप्रतिपादयितुंक्षमाः॥ लोकास्ततोहिप्रत्यक्षसिद्धंनान्येनकेनचि
त्॥शक्यंवारयितुंक्वापितच्चेन्नोत्तरगोचरं॥कथमेवोत्तरःकालस्तद्गोमोक्षश्चगम्यते ॥ आगमोपिहिसामान्येसि

द्धेप्रत्यक्षतःपुनः॥विशेषंगमयेदेवकथंशक्तिग्रहोन्यथा॥अतीतानागतार्थेषुजातेशक्तिग्रहेखिलं॥विशेषंज्ञाप
येद्वाक्यंनतदज्ञातशक्तिके॥शक्तिश्चेद्वर्तमानेस्यान्नातीतानागतंवदेत्।यदिशक्तिग्रहोन्यत्रकथंसस्यात्तदग्रहे।
सामान्यंद्दष्टमेवासावन्यत्रगमयेद्यदि॥सामान्यवर्जितंवस्तुस्वरूपंगमयेत्कथं॥ नस्वरूपत्वसामान्यंकेनाप्यंगी
कृतंक्कचित्॥ स्वरूपंचेदनुगतंव्यावृत्तंतत्रकिंभवेत्॥सर्वानुगतधर्माणामंतेहिस्वत्वमिष्यते॥किंव्यावृत्तमितिप्र
श्नेस्वरूपमितिकेवलं॥ स्यादुत्तरंततोन्यच्चेत्तदेवस्वयमेवनः॥एवंव्यावृत्तरूपेपियदाशक्तिग्रहोभवेत्॥ तस्यसा
मान्यतोज्ञानंविनासचभवेत्कुतः। अतोविशेषसामान्यरूपंसर्वमपीष्यते॥व्यावृत्तंयच्चसामान्यंतदेवस्याद्विशेष
तः॥नचैकधर्मतातेनपदार्थानांपरस्परं॥धर्माणांभेदद्दष्ट्यैवतत्साद्दश्यस्यदर्शनात्॥ अतःसर्वेपदार्थाश्चसामा
न्यात्साक्षिगोचराः॥ सर्वमित्येवविज्ञानंसर्वेषांकथमन्यथा॥ किंचित्साद्दश्यविज्ञानादखिलस्यापिवस्तुनः॥
शब्दशक्तिग्रहश्चस्यात्तत्तत्साद्दश्यमानतः॥प्रत्यक्षंमानसंचैवयदातीतार्थगोचरं॥ तदास्मृतिप्रमाणत्वमतीत
त्वविशेषितं॥आधिक्यमनुभूतात्तुयदातीतत्वमिष्यते॥मानताचकथंनस्यात्स्मृतेर्बाधश्चनात्रहि॥ मानत्वंप्र
त्यभिज्ञायाअपिसर्वानुभूतिगं॥ अतीतवर्तमानत्वधर्मिणीसाचद्दश्यते॥ नचसास्मृतिमात्रार्थातदिदंत्वग्रहै

अनु कतः ॥ अतोनवर्तमानैकनियमःस्याद्ग्रहेक्षजे ॥ नचप्रमाणतोन्यास्यात्प्रमितिर्नामकुत्रचित् ॥ मानाभावाद्गौ व्याख्या
॥ ४१ ॥ रवाच्चकल्पनायाःकिमेतया ॥ मयैतज्ज्ञातमितितुसाक्षिगंज्ञानगोचरं ॥ ज्ञानमेव,ततोन्यानप्रमितिर्नामदृश्य ३ । २
ते ॥ मानमातृप्रमेयाणांतदुच्छित्तिर्नहिक्वचित् ॥ स्वाप्नानामपिचैतेषांनबाधोदृश्यतेक्वचित् ॥ जाग्रत्त्वमात्रम
त्रैकमन्यथादृश्यतेस्फुटं॥अतोमिथ्यानचस्वप्नोजाग्रद्वज्जाग्रदेवच॥आत्मवत्क्वचिदात्माचस्यादेवभ्रमगोचरः॥
एतावतानमिथ्यासौस्वप्नेजागरितेतथा॥यद्यात्मन्यन्यथादृश्यंभ्रांतमत्रापितद्भवेत्॥अबाधितानुवृत्तेस्तुस्वप्ना
देर्भ्रांतताकुतः ॥ नचकाचित्प्रमाविश्वभ्रांतत्वे,सर्वमेवच ॥ अभ्रांतत्वेप्रमाणंतुकथंतद्भ्रांतताभवेत् ॥ किंचभ्रांत
त्ववादीसभ्रांतत्वंस्वमतस्यच ॥ अंगीकरोतिनियतंतत्रसंप्रतिपन्नता ॥ वादिनोस्तेनचाभ्रांतंविश्वमेवभविष्य
ति ॥ भ्रांतत्वभ्रांतताचेत्स्यात्कथंनाभ्रांतिसत्यता ॥ अशेषदोषदुष्टंतन्मतंहेयंबुभूषुभिः ॥ येनस्वमतहेयत्वंस्व
यमंगीकृतंसदा ॥ भ्रांतित्वाद्दुर्घटत्वस्यभूषणत्वाच्चकेवलं ॥ उन्मत्तोपिकथंतस्यमतंस्वीकर्तुमिच्छति ॥ ईशश
क्तेरचिंत्यत्वान्महोन्मत्तैःप्रवर्तितं॥ अतःप्रज्ञात्रमायोक्ताजैव्युपादानमेवसा॥निमित्तमैश्वरीमुख्यानिर्मितंत्रा ॥ २०१ ॥
तमेवच ॥ ताभ्यांसहपृथक्चैवमायामात्रमितीर्यते ॥ उभाभ्यांमातमैश्वर्यात्रातंसहपृथक्ततः॥ प्रज्ञात्मकंमनो

येनमनोरूपाश्चवासनाः ॥ धीर्भीरितिमनस्त्वेवेत्याहचश्रुतिरंजसा ॥ चिदचिन्मिश्रमेवैतन्मनोयावच्चसंसृतिः
॥ तेनावस्थाइमास्सर्वाजीवःपश्यतिसर्वदा ॥ मनोविकाराविषयाःस्वाप्नायद्वाह्यवन्नते ॥ स्थूलाभवंत्यतस्तेषा
स्पष्टतानतथाक्वचित् ॥ क्वचित्स्पष्टाअपिस्युष्टेवासनामानसीचसा ॥ १॥ ॥ ॐपराभिध्यानात्तुतिरोहितंत
तोह्यस्यबंधविपर्ययौॐ ॥ ॥ ईशेच्छयांतर्दधातिव्यज्यतेचपुनस्तया॥सृष्टैववासनाभिश्चप्रपंचंस्वाप्नमीश्वरः ॥
वासनामात्रतांतस्यनीत्वांतर्धापयत्यजः॥२॥ ॥ॐतदभावोनाडीषुतच्छ्रुतेरात्मनिहॐ॥ ॥ॐअतःप्रबोधो
स्मात्ॐ॥ ॥ॐमुग्धेर्धसंपत्तिःपरिशेषात्ॐ ॥ ॥सुषुप्तिबोधमोहांश्चस्ववशस्तद्वशंसदा ॥ जीवंनयतिजीवे
शो ॥४॥५॥७॥ ॥ॐसएवचकर्मानुस्मृतिशब्दविधिभ्यःॐ ॥ ॥ नान्यःकर्तास्यकश्चन ॥६॥ ॥ ॐनस्थान
तोपिपरस्योभयलिंगंसर्वत्रहिॐ ॥ ॥ नस्थानभेदतोप्यस्यभेदःकश्चित्परेशितुः ॥ सर्वत्राशेषदोषोज्झपूर्णक
ल्याणचिद्गुणः॥ ॥ॐनभेदादितिचेन्नप्रत्येकमतद्वचनात्ॐ ॥ ॥ तद्विरुद्धंतुयत्तत्रमानंनैवक्वचिद्भवेत् ॥ महा
तात्पर्यरोधेनकथंतन्मानमत्रतु॥दुःखाप्ययसुखावाप्तिहेतुत्वेनैववेदवाक् ॥भवेन्मानंतदीशानात्प्रसन्नादेवना
न्यथा ॥ प्रसन्नतागुणोत्कर्षज्ञानादेवहिकेवलं ॥ निर्दोषतापरिज्ञानादपिनान्येनकेनचित् ॥ योमामशेषदोषो

ज्झंगुणसर्वस्वबृंहितं ॥ जानात्यस्मैप्रसन्नोहंदद्यांमुक्तिंनचान्यथा ॥ योमामशेषाभ्यधिकंविजानातिसएवमां
॥ विजानात्यखिलांस्तस्यदद्यांकामान्परंपदं ॥ योमामेवमसंमूढः किंमांनिंदंतिशत्रवः ॥ इत्यादिवेदस्मृतिग
वाक्यैरेवावसीयते ॥ लोकतश्चप्रसादेनमुक्तिःसगुणवेदनात् ॥ महातात्पर्यमुख्यस्यविरोधादतएवहि ॥ दोषि
त्वनिर्गुणत्वाल्पगुणत्वादिकथंचन ॥ नार्थःश्रुतिपुराणादेस्तद्विरुद्धोखिलस्यच ॥ अर्थःस्वयंविनिर्णीतोवासुदेवे
नसादरं। इतिगुह्यतमंशास्त्रमिदमुक्तंमयानघ। एतद्बुध्वाबुद्धिमान्स्यात्कृतकृत्यश्चभारत। इत्यतोखिलसच्छास्त्र
विरुद्धत्वेननानुमा। वर्ततेतत्रतेनेशोनिर्णीतोखिलसद्गुणः ॥८॥ ॥ॐअतएवचोपमासूर्यकादिवत्ॐ॥ ॥ न
चचित्त्वादभिन्नत्वंजीवस्येशवदाप्यते। यतआभासतामेवश्रुतिरस्यवदत्यलं। यथैषापुरुषेच्छायाएतस्मिन्नेतदा
ततं॥ छायायथापुंसदृशीपुमधीनाचदृश्यते॥ एवमेवात्मकाः सर्वेब्रह्माद्याःपरमात्मनः॥ सत्ताप्रतीतिकार्येषुपुम
धीनायथेयते। आभासाएवपुरुषामुक्ताश्चपरमात्मनः। छायाविष्णोरमातस्याश्छायाधाताविशेषकौ। तस्येंद्रका
मौचतयोस्तयोरन्येखिलाअपि॥ हरेर्ब्रह्मास्यगीस्तस्याविशेषाविंद्रएतयोः॥ मारश्चाभासकाःसर्वएतयोस्तदधी
नतः ॥ सर्वेल्पशक्तयश्चैवपूर्णशक्तिःपरोहरिः॥ चेतनत्वेपिभिन्नास्तेतस्मादेतेनसर्वदा ॥ इत्यादिश्रुतिवाक्येभ्यो

ज्ञायतेभेदएवहि॥आभासत्वंहिनिर्णीतंजीवस्यपरमात्मनः॥तन्नयुक्तंयदाभासउपाध्यायत्तईयते॥उपाध्याय
त्तताभावादाभासत्वविरोधतः॥ चेतनत्वेनचांशत्वात्समुदायैक्यमापतेत्॥ अतःपृथक्त्वमुदितंसमुदायांश
योर्भवेत्॥ईशाख्यसमुदायेस्यादीशरूपेष्विवोदिता॥ अतोदेहाद्युपाधीनामपायेसमताभवेत्॥ईशरूपैरथा
भासमुख्यतःसूर्यकादिवत्॥ यदातदोपाध्यायत्तरूपाणांनाशिताभवेत्॥ इत्याशंकानिवृत्त्यर्थमाहवेदाधिपः
प्रभुः॥अतएवोपमेत्येवचान्याभासविशेषितां॥ यदुक्तंतदधीनत्वंसर्वावस्थास्वशेषतः॥ जीवस्यसदृशत्वंच
चित्त्वमात्रंनचापरं॥ तावन्मात्रेणचाभासोरूपमेषांचिदात्मनां॥ नोपाध्यधीनताद्यैश्चनातिसाम्यंनिदर्शने॥
किंचित्सुखादिसादृश्यमपीशेनासुरानृते॥ ततआभासतेनित्यंतद्धदाभासतेपिच॥भानमस्तित्वमपिचैवास
मंताद्यतस्ततः॥ जीवआभासउद्दिष्टःसदैवपरमात्मनः॥ नजलायत्तसूर्यादिप्रतिबिंबोपमत्वतः॥तदधीनत्व
मेवेतिकिंचित्सादृश्यमेवच॥ संप्रकाशयतःसूत्रगतावखिलमानतः॥जीवेशभेददृष्ट्यैवसमुदायैकताकुतः॥
अशेषदोषराहित्यंसर्वशक्तित्वतोहरेः॥ सर्वोपेतेतिकथितमतऐक्यंक्वदोषिणा॥अशेषशक्तियुक्तश्चेत्स्वातंत्र्या
द्दोषवान्कथं॥ अनुसंधानरहितमैक्यंचेदेकतानतत्॥ चेतनैक्येनुसंधानंप्रमाणंनैवचापरं॥अनुसंधानरहितं

समुदायैक्यमेवचेत् ॥ चेतनेष्वस्तुतन्नाममात्रमेवयतस्ततः ॥ मुक्तौस्यादनुसंधानमित्यपिस्यात्सुदुष्करं॥ स
र्वज्ञएकतांनानुसंधत्तेनैवसायतः ॥ पश्चात्स्यादनुसंधानंचेन्मिथ्याज्ञानिताभवेत् ॥विद्यमानानुसंधानंनचेदज्ञ
त्वमापतेत् ॥ असदैक्यंभवेत्पश्चाद्यदिस्यात्सप्तमोरसः॥समुदायैक्यमेतस्माद्दूरतोपाकृतंसदा॥अतोशेषगुणो
न्नद्धंनिर्दोषंयावदेवहि ॥ तावदेवेश्वरोनामतत्रभेदोपिनक्कचित् ॥ नेहनानास्तिकिमपिहरयोयमयंहिसः ॥ इ
त्यादिश्रुतिमानेनजीवांशाःसर्वएवच॥नियमेनानुसंधानवंतोयद्येकतास्वतः॥अंशिनोशेषसंधानमत्यल्पस्या
पिविद्यते ॥ भुविजातेनचांशेनसुखदुःखादितद्गतं॥अनुभूयतेविशेषस्तुकश्चिदीशकृतोभवेत् ॥ईशस्याचिंत्य
शक्तित्वान्नाशक्यंक्वापिविद्यते॥सेशतानुपपन्नैवयदिजीवैकतास्यहि॥अनीशस्येशतेत्येवविरुद्धंसर्वमानतः॥
ईशत्वेनैवविज्ञातमनीशत्वेनचेच्छ्रुतिः॥अनीशत्वेनविज्ञातमीशत्वेनाथवादिशेत्॥उपजीव्यविरोधेननैवमान
त्वमेष्यति॥अतएवेशतासिद्धेर्नकिंचिच्छक्यमस्यच ॥ईशत्वेनीशभेदेनश्रुत्यासम्यक्प्रकाशिते ॥अयुक्तमपि
चान्यत्रयुक्तंभवतितद्बलात् ॥ अतोन्यत्रापियद्दृष्टंतदीशेनैवकल्प्यते ॥ श्रुत्याभासाप्तमपिनहीशत्वपरिपंथि
यत् ॥ईशोनीशोजगन्मिथ्यादुःखीमुक्तोभिदानहि ॥ इतिप्रतिज्ञाव्याघातःसर्वदोषाधिकाधिकः ॥ इतिहिब्र

ह्मतर्कोक्तिरतिहेयमतोखिलैः॥बुभूषुभिर्मतमिदंजीवेशाभेदवादिनः ॥ नायुक्तमीशितुःकिंचिदीशत्वस्यावि
रोधियत् ॥ यदीशत्वविरोधिस्यात्तदेवायुक्तमंजसा ॥ ईशत्वस्याविरोधेनयोजयित्वाखिलाःप्रमाः ॥ सिद्धेश
त्वेनचायुक्तमपिहीशेनयोजयेत्॥मानतःप्राप्तमखिलंनामानंयोजयेत्क्वचित्॥इतिहिब्रह्मतर्कोक्तिरतोयुक्तमि
होदितं ॥ १०॥ ॥ ॐरूपवदेवहितत्प्रधानत्वात्ॐ ॥ ॥ सचाप्राकृतरूपत्वादरूपःस्वगुणात्मकं ॥ रूपमस्य
शिरःपाणिपादाद्यात्मकमिष्यते॥अतोनानित्यतानैवश्रुतिद्वयविरोधिता।यथाहितैजसस्यैवप्रकाशस्योज्झि
तावपि॥आत्मैवज्योतिरित्याहजीवस्येशंश्रुतिस्तथा ॥ ९ ॥ ॥ॐवृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्या
देवंॐ ॥ ॥ तद्भक्तितारतम्येनतारतम्यंविमुक्तिगं ॥ ब्रह्मादीनांचसर्वेषामानंदादेर्यथाक्रमं ॥ १२॥ ॐस्था
नविशेषात्प्रकाशादिवत्ॐ ॥ ॥ प्रतिबिंबवदप्येषामानंदोन्यगुणायथा ॥ ॥ ॐउपपत्तेश्चॐ ॥ ॥ नाराय
णगुणाधीनश्चाल्पस्तदपेक्षया॥तस्माद्भिन्नश्चसततमन्यज्ज्ञानंपरस्यच॥ अन्यज्ज्ञानंतुजीवानामन्यआनंद
ईशता॥मुख्येशतापरेशस्यगौणीजीवस्यसायतः॥इतिश्रुतेः ॥१७॥ ॥ ॐप्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्र
वीतिचभूयःॐ ॥ ॥ सृष्टिनाशौतदधीनावितीरिते ॥ स्वभावत्वात्स्थितेर्नैतदपेक्षेतिनयुज्यते॥यतस्स्वभावो

अनु
॥ ४४॥

प्यखिलईशायत्तोखिलस्यच ॥ १३ ॥ ॥ ॐतदव्यक्तमाहहिॐ ॥ ॥ अव्यक्तोपिस्वशक्त्यैवभक्तानांदृश्य
तेहरिः ॥ १४ ॥ ॥ ॐउभयव्यपदेशात्त्वहिकुंडलवत्ॐ ॥ ॥ तदभिन्नागुणानित्यमपिसर्वेविशेषतः ॥
गुणत्वेनगुणित्वेनभोक्तृभोग्यतयास्थितः॥विशेषात्मतयातेषांनित्यशक्त्यात्मनातथा॥नित्यंस्थितेर्नधर्माणां
क्रियादीनामनित्यता ॥ नविशेषात्मताचेयमनित्याशक्तिरूपता ॥ सैवयत्सविशेषास्याद्विशेषोन्योनचाप्य
यं ॥ स्वनिर्वाहकताहेतोस्तथापिस्याद्विशेषता ॥ विशेषत्वेनविज्ञातैःप्रमाणैरखिलैरपि ॥ ससर्जसंजहारे
तिविशेषोह्यवगम्यते ॥ श्रुत्यैवससएवेतितदभेदश्चगम्यते ॥ भेदोयदिविशेषस्यसभेदोभेदिनाकथं ॥ भिन्न
श्चेदनवस्थास्यादभिन्नश्चेत्पुरानकिं ॥ विशेषोभिन्नएवेतितेननाभ्युपगम्यते ॥ अभिन्नोनिर्विशेषश्चेद्भेदस्त
द्भेदताकुतः ॥ अनेनानेनभिन्नोयमितियत्सविशेषतः ॥ भेदएवैषबहुधादृश्यतेतत्किमुत्तरं ॥ अभेदभेद
योश्चैवस्वरूपत्वंहिभेदिनः ॥ तयोरप्यविशेषत्वेपर्यायत्वंहिशब्दयोः ॥ अभेदभेदशब्दौचपर्यायावितिकोवदे
त् ॥ भेदोन्योन्यमभेदश्चभेदिनाचेद्विशेषिता ॥ अविशेषेकथंभेदोभेदिनैकस्तथाभिदा ॥ पुनस्तयोर्विभे
दश्चभेदिमात्रत्वतोभवेत्॥भेदिनश्चैवभेदस्यविशेषोयदिगम्यते ॥ अभेदाभेदिनोश्चैवकिंभेदोभेदभेदयोः ॥

व्याख्या.
३ । २

॥२०४॥

विशेषेणैवसर्वत्रयदिव्यवहृतिर्भवेत् ॥ कल्पनागौरवायैवकिंभेदःकल्प्यतेतदा ॥ ऐक्यप्रतीत्यभावेनभेदएवग
वाश्रयोः ॥ सएवेतिप्रतीतौहिविशेषोनामभण्यते ॥ सच्चिदादेरपर्यायसिद्ध्यर्थंमायिनापिहि ॥ अंगीकार्यो
विशेषोयंयद्यसत्यविशेषणं ॥ पृथक्पृथग्वारयितुंशब्दांतरमितीष्यते ॥ मायाविशेषराहित्यविशेषणविशेषि
ता ॥ सत्यस्यापिभवेत्साचतथाचेदनवस्थितिः ॥ यदिसत्येविशेषोननतदुक्तिर्भवेत्तदा ॥ लक्ष्यतेचेत्तेनलक्ष्य
मित्यपिस्याद्विशेषिता ॥ पुनःपुनर्लक्षणायामपिस्यादनवस्थितिः ॥ यद्यभावविशेषित्वंस्यादंगीकृतमेवते ॥
असार्वज्ञादिराहित्यमप्येवंतेभविष्यति ॥ तदासार्वज्ञमेवस्याद्भावार्थत्वान्नञोर्द्वयोः ॥ यदिनैतादृशंग्राह्यमसु
खत्वानिवर्तनात् ॥ असत्त्वाज्ञानतादेश्चस्यादसत्त्वादिकंतदा ॥ अनृतादिविरोधित्वंयद्यस्याभ्युपगम्यते ॥
अनैश्वर्यविरोधित्वमप्येवंकिंनिवार्यते ॥ अखंडखंडनादेवंविशेषोखंडवादिना ॥ खंडितेनापिमनसास्वीका
र्योन्यथागतेः ॥ अखंडखंडवादिभ्यांखंडाखंडेनचैवतत् ॥ महादरेणशिरसिविशेषोधार्यएवहि ॥ निदर्शनत्र
येणातोभगवानत्यभिन्नतां ॥ गुणानामादरेणाहतच्चनाभिहितान्वयः ॥ यदाशेषविशेषाणामुक्तिःसामान्यतो
भवेत् ॥ पदैकेनाप्युत्तरेणविशेषावगतिर्भवेत् ॥ यतोशेषविशेषाणांवस्तुनास्त्येवचैकता ॥ अतःसामान्यतो

ज्ञातः पदांतरबलात्पुनः ॥ भवेद्विशेषतोज्ञातस्तेनस्यादन्वितोक्तिता ॥ स्वार्थएवान्वितोयस्मात्केनचित्तद्विशे
षतः ॥ अनेनेतितदुक्त्यैवज्ञायतेऽनुभवेनहि ॥ यद्यनन्वितमेवैतत्पदंस्वार्थंवदेदिह॥ तथान्यान्यपिसर्वाणिकः
कुर्यादन्वयंपुनः ॥ व्यापारोनहिशब्दस्यपरःस्वार्थप्रकाशनात्॥ पुमानप्येकवारोक्त्याकृतकृत्योयदाभवेत् ॥
अन्वयस्यकथंज्ञानंशब्दार्थत्वंयदास्यन ॥ यदैवानन्वितार्थस्यवचनंतैःपदैर्भवेत् ॥ अनन्वितस्स्याच्छब्दार्थोन
तदर्थोहिसोन्वयः ॥ निराकांक्षपदान्येववाक्यमित्युच्यतेबुधैः ॥ तत्तदर्थाभिधानेनस्यान्निराकांक्षताचसा ॥
अपूर्तेस्तावदर्थानामाकांक्षापूर्वमिष्यते॥कर्मकर्तृक्रियाणांतुपूर्तौकोन्योन्वयोभवेत्॥ अपूर्तिश्चेत्पदैरुक्तैःकिं
नृशृंगेणपूर्यते ॥ व्यापारश्चेत्पुनस्तेषामनुक्तावपिकिंनसः ॥ उक्तेबुद्धिस्थताहेतोर्यदिव्यापारइष्यते ॥ बुद्धि
स्थत्वाययत्नंनकथंकुर्युःपुरैवच ॥ पुरुषाधीनतातेषांयदिपश्चाच्चसासमा ॥ पुमानेवान्वयायैषांयदिपश्चाद्विचे
ष्टते॥अनन्विताभिधानानांसएवार्थांतरोक्तिषु ॥ यततांशब्दशक्तिश्चेत्तत्रनैवान्वयेकथं ॥ तत्कल्पनागुरुत्वा
दिदोषेतोभिहितान्वयः ॥ अनुभूतिविरुद्धश्चत्याज्यएवमनीषिभिः ॥ कर्तृशब्देह्यभिहितेधर्मसामान्यवेदना
त्॥ विशेषधर्ममन्विच्छन्किमित्येवहिपृच्छति ॥ गुणक्रियादिधर्माणांविशेषेकथितेपुनः॥ निराकांक्षोभवेद्य

स्माच्छब्दाअन्वितवाचकाः ॥ अतोनंतगुणात्मैकोभगवानेकएवतु ॥ उच्यतेसर्ववेदैश्च ॥१५॥ ॥ ॐपरमतः
सेतून्मानसंबंधभेदव्यपदेशेभ्यःॐ॥ ॥तेचाखिलविलक्षणाः ॥ सर्वेसर्वगुणात्मानःसर्वकर्तारएवतु ॥ तथापि
सविशेषाश्च ॥ ॥ ॐबुद्ध्यर्थःपादवत्ॐ ॥ ॥ विद्वद्युत्पत्तितोपिच ॥ तैस्तैश्शब्दैश्च भण्यंतेयुज्यतेचोपदेशतः ॥
अन्यानंदादिसादृश्यमानुकूल्यादिनापरं ॥ पूर्णत्वादिमहत्तेषांवैलक्षण्यंश्रुतोश्रुतं ॥ पूर्णोशेषनियंताचसुखा सुखादुत्तमः
दुत्तमएकलः ॥ गुणादिसमुदायोयंवासुदेवःसुनिष्कलः ॥ वासुदेवश्रुतिश्चैषागुणान्वक्तिहरेःपरान् ॥ १६ ॥
॥ ॥ ॐपूर्वंतुबादरायणोहेतुव्यपदेशात्ॐ ॥ ॥ सएवाशेषजीवस्थनिःसंख्यानादिकालिकान् ॥ धर्माध
र्मान्सदापश्यन्स्वेच्छयाबोधयत्यजः ॥ कांश्चित्तेषांफलंचैवददातिस्वयमच्युतः ॥ नतेविशेषंकमपिप्रेरणादि
कमच्युते ॥ कुर्युःकदापितेनायंस्वतंत्रोनुपचारतः॥ कर्माणितानिचपृथक्चेतनान्येवसर्वशः ॥ अचेतनशरी
राणिस्वकर्मफलभांजिच॥प्रत्येकंतेषुचानंतकर्माण्येवंविधानिच ॥ तानिचैवमितीशस्यनिःसीमाशक्तिरुत्तमा
॥एकैवब्रह्महत्याहिवराहहरिणोदिता ॥ ब्रह्मपारस्तवेनैवनिष्क्रांताराजदेहतः॥स्तोत्रस्यतस्यमाहात्म्याद्याध
त्वंगमितापुनः ॥ प्राप्यज्ञानंपरंचापतथान्यान्यपिसर्वशः ॥ अनंतान्युदितान्येवंप्रभुणाकपिलेनहि ॥ संसा

रेपच्यमानानिकर्माण्यपिपृथक्पृथक् ॥ तस्मादनंतमाहात्म्यगुणपूर्णोजनार्दनः ॥ भक्त्यापरमयाराध्यइति
पादार्थईयते ॥ २० ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेतृतीयाध्या
यस्यद्वितीयःपादः ॥ ३ ॥ २ ॥ ॥ ॥ ॥ ॥
ॐ॥वैराग्यतोभक्तिदार्ढ्यंतेनोपासायदाभवेत्॥आपरोक्ष्यंतयाविष्णोरितिपादक्रमोभवेत् ॥ युक्तितोज्ञातवे
दार्थोनिरस्यसमयान्परान् ॥ परस्परविरोधंचप्रणुद्याशेषवाक्यगं ॥ अध्यात्मप्रवणोभूत्वातस्यसंनिहितत्वतः
॥ बहुयुक्तिविरोधानांभानात्तत्सहितश्रुतेः ॥ विरोधंचनिराकृत्यश्रुतीनांप्राणतत्वगान् ॥ परिहृत्यविरोधांश्च
तत्प्रसादानुरंजितः ॥ देहकर्तृत्वमीशस्यज्ञात्वाततपितृतास्मृतेः ॥ विशेषस्नेहमापाद्यसर्वकर्तृत्वतोधिकं ॥ नि
ष्पाद्यबहुमानंचतदन्यत्रातिदुःखतः॥उत्पाद्याधिकवैराग्यंतद्गुणाधिक्यवेदनात् ॥ सर्वस्यतद्वशत्वाच्चदार्ढ्यंभ
क्तेरवाप्यच॥यतेतोपासनायैवविशिष्टाचार्यसंपदा॥कर्तव्याब्रह्मजिज्ञासेत्युक्तेकिमितिसंशये ॥ अतइत्युदिते
प्यस्यविशेषानुक्तितःपुनः॥सृष्टिबंधनमोक्षादिकर्तृत्वस्यश्रुतत्वतः ॥ यतोमोक्षादिदातासावतोजिज्ञास्यएव ॥२०६॥
वः॥ इत्याहतत्परंब्रह्मव्यासाख्यंज्ञानरश्मिमत् ॥ येनैवबंधमोक्षःस्यात्सचजिज्ञासयागतः॥सुप्रसन्नोभवेदीशो

जिज्ञासातोस्यमुक्तिदा ॥ मोक्षादिदत्वमीशस्यकथमेवावगम्यते ॥ इतिचेच्छास्त्रयोनित्वाच्छास्त्रगम्योहिमो
क्षदः ॥प्रत्यक्षावसितेभ्यःस्याद्यदिमोक्षःकथंचन॥किमित्यनादिसंसारमग्नाःसर्वाइमाःप्रजाः॥यस्मान्नियमतो
दुःखहानिःप्रत्यक्षतोभवेत्॥धावंत्येवतमुद्दिश्यराजाद्यमखिलाःप्रजाः॥अनुमागम्यतोमोक्षोयदिस्यादनुमैव
हि॥दृष्टपूरुषवन्मोक्षदातृतांविनिवारयेत्॥तच्छास्त्रगम्यएवैकोमोक्षदोभवतिध्रुवं ॥ शास्त्रगम्यश्चनान्योस्ति
मोक्षदत्वेनकेशवात्॥मोक्षदोहिस्वतंत्रःस्यात्परतंत्रःस्वयंसृतौ॥वर्तमानःकथंशक्तःपरमोक्षायकेवलं ॥अन्या
श्रयेणयद्येषदद्यान्मोक्षंसएवहि॥तेननानुसृतोमोक्षंनदद्यादन्यवाक्यतः॥ अतस्तदर्थमपिसज्ञेयोविष्णुर्मुमुक्षु
भिः ॥ यमेवैषइतिश्रुत्यातमेवेतिचसादरं ॥ शास्त्रयोनित्वमस्यैवज्ञायतेवेदवादिभिः॥ यएनंविदुरमृताइत्युक्त
स्तुसमुद्रगः ॥ तदेवब्रह्मपरममितिश्रुत्यावधारितः ॥ यतःप्रसूतेतिततःसृष्टिमाहततोहरिः ॥शास्त्रयोनिर्नचा
न्योस्तिमुख्यतस्त्वितिगम्यते ॥ शास्त्रयोनित्वमेतस्यज्ञायतेहिसमन्वयात् ॥ समितिह्युपसर्गेणपरमुख्यार्थतो
च्यते॥एवंपरममुख्यार्थोनारायणइतिश्रुतेः॥निर्धारणायनाशब्दमितिवेदपतिर्जगौ॥कथंसमन्वयोज्ञेयःस्वल्प
शाखाविदांनृणां॥वेदाह्यनंताइतिहिश्रुतिराहाप्यनंततां॥अनंतवेदनिर्णीतिर्महाप्रलयवारिधेः॥ उत्तारणोप

मेत्यस्मान्नज्ञेयोत्रसमन्वयः॥इत्याशंकापनोदार्थंसआहकरुणाकरः। अशक्योत्तारणत्वेपिह्यागमापारवारिधेः
॥निर्णीयतेमयैवायंरोमकूपलयोदिना॥यद्यप्यशेषवेदार्थोदुर्गमोखिलमानवैः॥ मज्ज्ञानाव्याकृताकाशेप्राप्नो
तिपरमाणुतां॥इतिप्रकाशयन्विश्वपतिराहप्रमेयतां ॥निखिलस्यापिवेदस्यगतिसामान्यमंजसा॥ कोनाम
गतिसामान्यमनंतागमसंपदः॥ ज्ञानसूर्यमृतेब्रूयात्तमेकंबादरायणं॥ अन्योप्यल्पमतिःशाखाचतुष्पंचगतंव
सु॥जानन्ननुमितत्वेनब्रूयात्तस्यप्रसादतः॥ इतिमुख्यतयाशेषगतिसामान्यवित्प्रभुः॥ प्रतिजज्ञेदृढंयस्माद्देवा
नामपिपूर्यते॥ अतोनिखिलवेदानांसिद्धएवसमन्वयः॥ इतिसुज्ञापितार्थोपिपृथक्चाहसमन्वयं॥तत्रप्रथम
तोन्यत्रप्रसिद्धानांसमन्वयः॥शब्दानांवाच्यएवात्रमहामह्लेशभंगवत्॥ इतोप्यभ्यधिकत्वेपितुर्यपादोदितस्य
तु॥महासमन्वयेतस्मिन्नाधिकारोखिलस्यहि॥ ब्रह्मैवाधिकृतस्तत्रमुख्यतोन्येयथाक्रमं॥दुर्गमत्वाच्चनैवात्रप्रा
थम्येनोदितोंजसा॥ अतोन्यत्रप्रसिद्धानांशब्दानांनिर्णयायतु॥ प्रवृत्तःप्रथमंदेवस्तत्रानंदादयोगुणाः॥ ईश
स्यैवेतिनिर्णीताःश्रुतियुक्तिसमाश्रयात्॥ देवतांतरगास्सर्वेशब्दवृत्तिनिमित्ततः ॥ विष्णुमेववदंत्यद्धातत्सं
गादुपचारतः॥ अन्यदेवान्वदंतीहविशेषगुणवत्त्वतः॥ विष्णुमेवपरंब्रूयुरेवमन्येप्यशेषतः॥इत्यन्यत्रप्रसिद्धो

रुशब्दराशेरशेषतः॥ ज्ञातेसमन्वयेविष्णौलिंगैर्ह्येषसमन्वयः॥तेषामन्यगतत्वेतुनस्यात्सम्यक्समन्वयः॥इत्ये
वाशेषलिंगानांब्रह्मण्येवसमन्वयं॥आहोभयगतत्वंचस्यादतोलिंगशब्दयोः ॥ इतिसंशयनुत्त्यर्थमुभयत्रप्रती
तितः ॥ शब्दानांवर्तमानानांसलिंगानांविशेषतः ॥ समन्वयोहरावेवयन्नैवान्यत्रमुख्यतः॥शब्दालिंगानिच
यतोनैवान्यत्रस्वतंत्रता॥ अस्वतंत्रेषुशब्दस्यवृत्तिहेतुर्नमुख्यतः॥यतोतोयदधीनास्तेशब्दार्थत्वमुपागताः ॥
अत्यल्पेनैवशब्दस्यवृत्तिहेतुगुणेनतु ॥ अयोयथादाहकत्वंसएवेशःस्वतंत्रतः ॥ मुख्यशब्दार्थइतिहिस्वीकर्त
व्योमनीषिभिः ॥ इत्याहैवंचशब्दानांनारायणसमन्वये ॥सिद्धेप्यशेषशब्दानांनकथंचनयुज्यते॥विरोधादव
रत्वादेरपिप्राप्तिर्यतोभवेत् ॥ इतिचेदवरत्वादिद्विविधंह्युपलभ्यते ॥ परस्यावरताहेतुर्यःस्वयंपरएवसन् ॥ सो
पिह्यवरशब्दार्थोयथाराजाजयीभवेत्॥अन्योवरत्वानुभवीतयोःपूर्वोस्तिकेशवे॥द्वितीयोजीवएवास्तिस्वातं
त्र्यान्नैवदूषणं ॥ हरेरेवमशेषेणसर्वशब्दसमन्वये॥ उक्तेविरोधहीनस्यस्यात्समन्वयतायतः॥अतोशेषविरोधा
नांकृतेशेननिराकृतिः ॥ समन्वयाविरोधाभ्यांसंजातेवस्तुनिर्णये॥किंमयाकार्यमित्येवस्याद्बुद्धिरधिकारिणः
तत्रभक्तिविधानार्थमभक्तानर्थसंततौ॥उक्तायांभक्तिदार्ढ्यायप्रोक्तेऽशेषगुणोच्चये ॥वक्तव्योपासनानित्यंकर्त

व्येत्यादरेणहि ॥ सोपासनाचद्विविधाशास्त्राभ्याससरूपिणी॥ध्यानरूपापराचैवतदंगंधारणादिकं॥ तथोभ
यात्मकंचैवपादेस्मिन्बादरायणः॥आहोपासनमद्धैवविस्तराच्छ्रुतिपूर्वकं॥ध्य॥ पृथग्दृष्टिरशक्यत्वमनिर्णीतिः
समुच्चयः॥ विशेषदर्शनंकार्यलोपोनानोक्तिराशुता ॥ विभ्रमोपाकृतिर्लिंगमनवस्थाविशेषिता॥ अप्रयोजन
ताचातिप्रसंगोदूरसंश्रयः ॥ विशिष्टकारणंचेष्टादृष्टवैरूप्यमुन्नतिः॥ अनुक्तिरप्रयत्नत्वंदृढबंधपराभवौ॥पुंसा
म्यंप्राप्तसंत्यागःकारणानिर्णयोभ्रमः ॥ विशेषदर्शितालापौगुणसाम्यंपृथग्दृशिः॥अगम्यवर्त्मसंधानमिष्टंफल
मकल्पना॥ शुद्धवैरूप्यमंगत्वमविशेषदृशिःक्रिया ॥ युक्तयःपूर्वपक्षस्थास्सुज्ञेयत्वंविधिक्रिया ॥ माहात्म्यम
ल्पशक्तित्वंयथायोग्यफलंभवः॥ फलसाम्यंविशेषश्चगुणाधिक्यंप्रधानता॥ यथाशक्तिक्रियासंधिःप्रमाणबल
मानतिः॥ कारणंकार्यवैशेष्यंस्वभावोवस्तुदूषणं॥ प्रतिक्रियाविरोधश्चप्रतिसंधिरनूनता॥ संस्कारापाटवंस्वे
च्छानियतिर्वस्तुवैभवं॥विशेषोक्तिरमानत्वंप्राधन्यंप्रीतिरागमः॥सुस्थिरत्वंकृतप्राप्तिरनादिगुणविस्तरः॥ साध
नोत्तमतानानादृष्टिशिष्टिरनूनता॥अविघ्नत्वाविरोधौचगुणवैशेष्यमागमः॥ सिद्धांतनिर्णयाह्येतायुक्तयोव्याह
ताःसदा॥ध्य॥॥ॐसर्ववेदांतप्रत्ययंचोदनाद्यविशेषात्ॐ॥ ॥यथाशक्त्यखिलान्वेदान्विज्ञायोपासनंभवेत्॥त

त्राखिलस्यविज्ञप्तिःसम्यग्ब्रह्मणएवहि॥तदन्येषांयथायोगमखिलज्ञप्तिरिष्यते ॥ तावतोपासनेयोग्योभवेदेवा
खिलःपुमान् ॥ महत्त्वस्यपरंपारंविदित्वैवजनार्दनः ॥ स्तोष्यतामेतितुष्टत्वमितिनास्त्येवनारद॥किंतुनिश्चल
याभक्त्याह्यात्मज्ञानानुरूपतः॥ यःस्तोष्यतिसदाभक्तस्तुष्टस्तस्यसदाहरिः ॥ इत्यादिवाक्यसंदर्भाद्यथायोग्या
खिलज्ञता॥आत्मज्ञानानुरूपत्वंयथाशक्तिविचारणात्॥ ॥ॐस्वाध्यायस्यतथात्वेनहिसमाचारेधिकाराच्चॐ
॥ ॥ वेदःकृत्स्नोधिगंतव्यःस्वाध्यायाध्ययनंभवेत्॥ इत्यादिवाक्यवैयर्थ्यमन्यथाननिवार्यते॥ अद्यापितेनदे
वाद्याःशृण्वतेमन्वतेसदा॥ध्यायंतिचयथायोगंतथाप्यावस्तुनिर्णयात्॥श्रवणंमननंचैवकर्तव्यंसर्वथैवहि ॥ म
तिश्रुतिध्यानकालविशेषंगुरुरुत्तमः॥ वेत्तितस्योक्तमार्गेणकुर्वतःस्याद्धिदर्शनं॥ श्रवणंदृष्टतत्त्वस्यमननंध्या
नमेवच ॥ विशेषानंदसंप्राप्त्याअन्यस्यैतानिदृष्टये ॥ यदितादृग्गुरुर्नास्तिनिर्णीतश्रवणादिकं ॥ तत्सिद्धांता
नुसारेण्निर्णयज्ञात्समाचरेत् ॥ श्रवणादिविनानैवक्षणंतिष्ठेदपिक्वचित् ॥ अत्यशक्येतुनिद्रादौपुनरेवसमा
चरेत्॥ अभावेनिर्णयज्ञस्यसच्छास्त्राण्येवसर्वदा॥ शृणुयाद्यदिसज्ज्ञानप्राचुर्यमुपलभ्यते॥ महद्भ्योविष्णुभक्ते
भ्योयथाशक्तिचसंशयान् ॥ छिंद्यात्स्वतोधिकाभावेस्वयमेवसमभ्यसेत् ॥ ब्रूयादपिचशिष्येभ्यःसत्सिद्धांतम

अनु हापयन् ॥ अशेषगुणपूर्णत्वंसर्वदोषसमुज्झितिः ॥ विष्णोरन्यच्चतत्तंत्रमितिसम्यग्विनिर्णयः ॥ स्वतंत्रत्वंस व्याख्या.
॥ ४९ ॥ दातस्यतस्यभेदश्चसर्वतः॥अदोषत्वस्यसिध्यर्थंयदभेदेतदन्वयः॥तत्तंत्रत्वंचमुक्तानामपितद्गुणपूर्तये ॥ मुक्ता ३ । ३
नामपिभेदश्चनहिभिन्नमभिन्नतां ॥ गच्छद्दृष्टंक्वचित्तस्याप्यभावोनुभवोपगः ॥ पूर्वाभेदेदोषवत्त्वमीशस्ये
त्यतिभिन्नता ॥ नारायणेनमुक्तानामपिसम्यगितिस्थितिः ॥ भेदाभेदेप्यभेदेनदोषाणामपिसंभवः ॥ निर्दो
षत्वंरमायाश्चतदनंतरतातथा ॥ ब्रह्मासरस्वतीवींद्रशेषरुद्राश्चतत्स्त्रियः॥शक्रकामौतदन्येचक्रमान्मुक्तावपी
तिच ॥ सत्सिद्धांतइतिज्ञेयोनिर्णीतोहरिणास्वयं ॥ एतद्विरोधियत्सर्वंतमसेंधायकेवलं ॥ अंधंतमोविशंतीति
प्राहश्रुतिरतिस्फुटं।इत्येवश्रुतयोशेषाःपंचरात्रमथाखिलं।मूलरामायणंचैवभारतंस्मृतयोखिलाः। वैष्णवानि
पुराणानिसांख्ययोगौपरावपि ॥ ब्रह्मतर्कश्चमीमांसेत्यनंतःशब्दसागरः ॥ अनंतायुक्तयश्चैवप्रत्यक्षागममूल
काः ॥ प्रत्यक्षमैश्वरंचैवरमादीनामशेषतः ॥ मुक्तानामप्यमुक्तानामेतमेवार्थमुत्तमं॥अन्यावकाशरहितंप्रका ॥ २०९ ॥
शयतिसादरं॥एतदेवचसच्छास्त्रंदुःशास्त्रंतुततःपरं॥सच्छास्त्रमभ्यसेन्नित्यंदुःशास्त्रंतुपरित्यजेत्।असंशयेनत
म त्त्वस्यनिर्णयेब्रह्मदर्शनं॥सम्यग्विषमविज्ञानतारतम्यानुसारतः॥फलंभवेत्तारतम्यात्सुखदुःखात्मकंनृणां ॥स
म

म्यक्त्वाधिकविज्ञानात्सुखाधिक्यंभवेन्नृणां ॥ अतोयथात्मशक्त्यैवश्रवणंमननंतथा॥१॥॥ॐउपसंहारोर्थाभे
दाद्विधिशेषवत्समानेच ॐ॥॥कृत्वाथकुर्वन्नपिवानिदिध्यासनमाचरेत्॥२॥॥ॐअनुबंधादिभ्यश्च ॐ॥विषये
षुचसंसर्गाच्छाश्वतस्यचसंशयात्॥मनसाचान्यदाकांक्षात्परंनप्रतिपद्यते।इतिभारतवाक्यंहितेनैतद्दोषवर्जि
तः॥सदोपासनयायुक्तोवासुदेवंप्रपश्यति॥दोषाअनादिसंबद्धास्तेमुक्तिपरिपंथिनः॥ संत्येवप्रायशः पुंस्सुतेन
मोक्षोनजायते॥सर्वेतएतेजीवेषुदृश्यंतेतारतम्यतः॥ ऋजूनामेकएवास्तिपरमोत्साहवर्जनं।सगुणाल्पत्वमात्र
त्वान्नर्जुत्वेनविरुध्यते।अतोविष्णौपराभक्तिस्तद्भक्तेषुरमादिषु।तारतम्येनकर्तव्यापुरुषार्थमभीप्सता।स्वादरः
सर्वजंतूनांसंसिद्धोहिस्वभावतः। ततोधिकःस्वोत्तमेषुतदाधिक्यानुसारतः॥कर्तव्योवासुदेवांतंसर्वथाशुभमि
च्छता।नकदाचित्त्यजेत्तंचक्रमेणैनंविवर्धयेत्।समेषुस्वात्मवत्स्नेहःसत्स्वन्यत्रततोदया।कार्यैवमापरोक्ष्येणदृश्य
तेक्षिप्रमीश्वरः॥तत्तमोंधंव्रजेद्विष्णुसमत्वंयोनुपश्यति॥रमाब्रह्मशिवादीनामपिमुक्तौकथंचन।किमुताधिक्य
दृष्टेस्तद्गुणाभावमतेरपि॥दोषवेत्तुरभेदस्यद्रष्टुर्द्रष्टुस्तथोभयोः।इत्याहसच्छ्रुतिस्तेनसंप्रोक्तगुणसंयुतः।उपासीत
हरिंदृष्ट्वामुक्तिस्तेनैवजायते ॥ द्वेषाद्यन्मुक्तिकथनंश्रुतिवाक्यविरोधितत्॥ रिपवोयेतुरामस्यविमुखत्वान्निरा

अनु ॥ ५० ॥

मिणः ॥ अभिद्रोहपदेनित्यमंधेतमसितेस्थिताः ॥ हरिद्विषस्तमोयांतियेचैवतदभेदिनः ॥ तन्निर्गुणत्ववेत्तारस्त व्याख्या.
स्यदोषविदोपिच ॥ इत्यादिश्रुतिसंदर्भाद्द्वेषिणस्तमईयते ॥ हिरण्यकशिपुश्चापिभगवन्निंदयातमः ॥ विविक्षु ३।३
रत्यगात्सूनोःप्रह्लादस्यानुभावतः ॥ यदनिंदत्पितामह्यंत्वद्भक्तेमयिचाघवान् ॥ तस्मात्पितामेपूयेतदुरंताद्दुस्त
रादघात् ॥ निंदांभगवतःशृण्वंस्तत्परस्यजनस्यवा ॥ ततोनापैतियःसोपियात्यधःसुकृताच्च्युतः ॥ अवजानं
तिमांमूढामानुषींतनुमाश्रितं ॥ परंभावमजानंतोममभूतमहेश्वरं ॥ मोघाशमोघकर्माणोमोघज्ञानाविचेतसः ॥ शा
राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः ॥ मामात्मपरदेहेषुप्रद्विषंतोभ्यसूयकाः ॥ तानहंद्विषतःक्रूरान्संसारे
षुनराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु ॥ आसुरींयोनिमापन्नामूढाजन्मनिजन्मनि ॥ मामप्रा
प्यैवकौंतेयततोयांत्यधमांगतिं ॥ योद्विष्याद्विबुधश्रेष्ठंदेवंनारायणंप्रभुं ॥ कथंसनभवेद्द्वेष्यआलोकांतस्यकस्य
चित् ॥ योद्विष्याद्विबुधश्रेष्ठंदेवंनारायणंप्रभुं ॥ मज्जंतिपितरस्तस्यनरकेशाश्वतीःसमाः ॥ इत्यादिवाक्यसंदोहा
द्द्वेषिणस्तमएववतु ॥ ३१ ॥ ॥ ॐविद्यैवतुनिर्धारणात्ॐ ॥ ॥ नैवमोक्षइतिप्राहुर्लोकायतमतेस्थिताः ॥ भो ॥ २१० ॥
गःशरीरपर्यंतंभस्मीभावस्ततोभवेत् ॥ इतितत्केनमानेनदृष्टंप्रत्यक्षवादिना ॥ नहिप्रत्यक्षमानेनमोक्षाभावोव

सीयते॥घटतेमुक्तिदृष्टिस्तुपुरुषेणमहीयसा॥ नेतिवक्तुर्महत्त्वंतुकथंचननविद्यते॥ साधयन्सर्वसामान्यंकथ
मेवविशेषवान्॥ दृश्यंतेपुरुषालोकेपरापरविदोपिच॥ अपरोक्षदृशोयोगनिष्ठाश्चामलचक्षुषः॥प्रत्यक्षंदेवतां
दृष्ट्वातत्प्रसादाप्तभूतयः॥ज्ञानविज्ञानपारज्ञानिषिध्यंतेकथंनृभिः॥दृश्यतेचातिमाहात्म्यंतेषामतिमहौजसां॥
यदितेपिनिषिध्यंतेकिंनोक्तिस्तेनिषिध्यते॥यदुक्तवाक्यप्रामाण्यंप्रत्यक्षेणोपलभ्यते॥वरादयोपितद्दत्ताःसदा
सत्याभवंतिहि॥अप्रामाण्यंतदुक्तेश्चवृथावाचावसीयते॥ नहिप्रयोजनंकिंचित्परलोकनिवारणात्॥ वृथावा
चंवृथाहन्याद्यदितस्यकिमुत्तरं॥स्वजीवनविरोधायवदन्किंनामबुद्धिमान्॥ प्रामाण्येसंशयःकिंस्यात्तयोःपुरु
षयोरपि॥स्वजीवनविरुद्धोक्तिरज्ञोदृष्टस्यचापियः॥यश्चातींद्रियदेवोक्तिःश्रोतादृष्टपरावरः॥ अतीतानागतं
सर्वंलोकानुभवमापयन्॥अतःप्रत्यक्षगम्यत्वाद्वेदमात्वस्यचस्फुटं॥यद्यागमस्यनोमात्वमक्षजस्यतथाभवेत्॥
यद्यक्षजस्यमात्वंस्यादागमस्यकथंनतत्॥लोकवाक्याद्विशेषश्चाव्यभिचारेणसिध्यति।अस्तिमोक्षोपिधर्मेणय
थार्थज्ञानतोपिच॥प्रामाण्यमनुमायाश्चजिनस्याप्तत्वसाधने॥तद्वाक्याद्धर्मसज्ज्ञानविज्ञप्तिर्भवतीतिच॥ धर्मो
हिंसापरोनान्योज्ञानंपुद्गलदर्शनं॥इतिजैनाःकथंतत्स्यात्प्रमाणमनुमानतः॥विषयान्प्रतितिस्थितंह्यक्षंप्रत्यक्षमि

तिगीयते॥प्रत्यक्षशब्दानुसारादनुमेतिप्रकीर्तिता॥आसमंताद्गमयतिधर्माधर्मौपरंपदं।यच्चाप्यतींद्रियंत्वन्यत्ते
नासावगमःस्मृतः॥एतेनकारणेनैवतत्तन्मानत्वमिष्यते॥स्वरूपंहितदेतेषामन्यथासिद्धिमानतः॥अतोनुमा
कथंधर्मंपुद्गलंचापिदर्शयेत्॥स्वरूपेपुद्गलस्योक्तादोषाआनंदमेवच।नमन्यतेपुद्गलंसदुःखाभावःसुखंत्विति।मा
त्राभोगातिरेकेणसुखाधिक्यस्यदर्शनात्॥सुखस्याभावताकेननचस्यात्किंविपर्ययः॥यदिभावोपिकश्चित्स्या
त्तस्यैवाभावताकुतः॥यदिसर्वेप्यभावाःस्युरन्योन्यमितिभावता॥अभावाभावतैवस्यात्किंनश्छिन्नंतदाभवेत्।
भावत्वंविधिरूपत्वंनिषेधत्वमभावता॥निषेधस्यनिषेधोपिभावएवबलाद्भवेत्॥ प्रथमप्रतिपत्तिस्तुभावाभावनि
यामिका॥नचपुद्गलविज्ञानंमोक्षदंभवतिक्वचित्॥अस्वातंत्र्यात्पुद्गलस्यज्ञातोपिसुखदोनहि ॥ नहिदुःखिपरि
ज्ञानाद्दुःखित्वंविनिवर्तते ॥ यदिपुद्गलविज्ञानाद्दुःखीस्यात्कथंचन॥देहवानपिनादुःखीकिंज्ञानादुत्तरंसदा ॥
ईशक्त्यनुसारेणस्यात्कालादीशवादिनः॥कर्महेतुत्वमपितुनिश्चैतन्यान्नहिक्वचित्।अशेषदुःखविलयेनेदानीं
कारणंयथा॥तथोत्तरंनचैवस्याद्दृष्टिपूर्वानुमायतः॥ शक्तस्यान्यस्यविज्ञानंतत्प्रीतिजनकंयदि।तयैवबंधहानिः
स्यादितिकिंनामदूषणं॥स्वज्ञानाद्बंधहानिस्तुदृश्यतेकस्यकुत्रचित्॥अहिंसायाश्चधर्मत्वंकेनमानेनगम्यते॥हिं



सायाएवधर्मत्वमित्युक्तेस्यात्किमुत्तरं ॥ धर्मस्यसुखहेतुत्वमपिकेनावगम्यते ॥ हत्यायामोक्षहेतुत्वंकुतोमाना
न्निवार्यते ॥ नचशून्यपरिज्ञानाच्छून्यभावनयापिच ॥ मोक्षःकथंचनभवेद्यदीदानींकथंनसः ॥ परप्रसादने
च्छोस्तुविलंबोनामयुज्यते॥पुमिच्छाधीनतानोचेद्विलंबःकिंकृतोभवेत्॥अन्यत्रापिविलंबास्तुस्युरीशेच्छानि
मित्ततः ॥ अन्यथाकारणंचेत्स्यात्किंकार्यंनोपजायते ॥ कारणेसतिकार्यस्यभावःसुनियतोस्यहि ॥ विज्ञान
वादिनश्चैवविज्ञानाद्वैतवेदनात्॥ विज्ञानभावनाच्चैवमोक्षोनघटतेक्वचित् ॥ अंतर्ज्ञानस्यबाह्येचक्षणिकत्वस्यवे
दनात् ॥ भावनाच्चोक्तमार्गेणमानाभावान्नमुच्यते ॥ प्रकृतेःपुरुषस्यापिविवेकोमुक्तिसाधनं॥ इतिसांख्यान
चैतस्मिन्मानमीशाप्रसादतः ॥ श्रुतयःस्मृतयश्चैवयदेशस्यप्रसादतः ॥ वदंतिनियमान्मुक्तिंतमृतेऽतःकुतो
भवेत्॥कणादयोगाक्षपादाअपीशस्यप्रसादतः ॥ मुक्तिंब्रुवाणाअप्याहुर्भोगादेवचकर्मणां ॥ क्षयंप्राहुःकुत
श्चैतत्प्रसन्नेजगदीश्वरे॥भिद्यतेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः॥क्षीयंतेचास्यकर्माणितस्मिन्दृष्टेपरावरे॥भिद्य
तेहृदयग्रंथिश्छिद्यंतेसर्वसंशयाः॥क्षीयंतेचास्यकर्माणिदृष्टएवात्मनीश्वरे ॥ इतिश्रुतिपुराणादिवचनेभ्योन्य
थागतेः ॥ नचपाशुपताद्युक्तशिवादीनामनुग्रहात् ॥ नान्यःपंथाइतिह्युक्तंपुरुषज्ञानतःश्रुतौ ॥ सर्वेनिमेषाज

ङ्गिरेविद्युतःपुरुषादधि ॥ एवंपुरुषशब्दश्चप्रयुक्तोब्धिशयेहरौ ॥नतस्येशेकश्चनतस्यनाममहद्यशः॥इतिचाधि
पतिस्तस्यप्रतिषिद्धःस्वयंश्रुतौ॥विश्वतःपरमान्नित्यंविश्वंनारायणंहरिं ॥ इतिसर्वाधिकत्वोक्त्यासमोपिविनि
वारितः ॥ समाधिकस्यराहित्यान्नोपचारपुमानसौ ॥ पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यं॥उतामृतत्वस्येशानोयद
न्नेनातिरोहति ॥ मुक्तामुक्तपरेशत्वमितितस्याहसाश्रुतिः॥ अमृतेशानवचनात्सर्वस्येशानतोदिता ॥ यदि
सर्वत्वमुदितमुतेशइतितद्वृथा॥उतशब्दोवदेदेषहीशत्वस्यसमुच्चयं।पुरुषेणैवेदंव्याप्तमितिब्राह्मणंचाहतंप्रति॥
एतावानस्यमहिमेतिमहिम्नोवचोहितत्॥सोमृतस्याभयस्येशोमर्त्यमन्नंयदत्यगात् ॥ इत्यमुक्ताधिपत्यंतुपूर्वा
र्धोक्तमनूद्यच ॥ उतामृतस्येशइतिविधत्तेमुक्तिगेशतां ॥ अतोविष्णुपरिज्ञानादेवमुक्तिर्नचान्यतः ॥ तद्यथेति
श्रुतेश्चैवततःकर्मक्षयोभवेत् ॥ यथैधांसिसमिद्धोग्निर्भस्मसात्कुरुतेर्जुन ॥ ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरुते
तथा ॥ सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज ॥ अहंत्वासर्वपापेभ्योमोक्षयिष्यामिमाशुचः ॥ इत्यादिभगवद्वा
क्यैरुक्तार्थश्चावसीयते ॥ नित्यनैमित्तिकंकर्मकुर्वन्नन्यत्परित्यजन् ॥ मुच्यतेसंसृतेश्चैतदप्येतेननिराकृतं॥वि
द्वैवेतीममेवार्थंस्वयमेवाहवेदराट्॥विनाकर्मनमोक्षःस्याज्ज्ञानेनेत्यपिसाश्रुतिः ॥ नान्यःपंथाइतिह्येवनिवार

यतिसादरं॥अन्यथोपासनमपितमेवमितिवादिनी॥निवारयत्यादरेणनप्रतीकइतिप्रभुः॥अंधंतमःप्रविशंति
येत्वविद्यामुपासते॥इतिश्रुतिविरोधाच्चनान्यथोपासनंभवेत् ॥ नचाप्येकत्वविज्ञानादुक्तन्यायेनमुच्यते ॥ इ
तिसर्वंप्रविज्ञायसर्वैस्तर्कैःसदागमैः॥उपासीतहरिंनित्यंगुणैरेवस्वयोग्यतः। ब्रह्मासर्वगुणैश्चैवक्रियासामान्यत
श्चगीः॥गुणसामान्यतोरुद्रोद्रव्यसामान्यतःपरे॥१९॥ ॥ॐयावदधिकारमवस्थितिराधिकारिणांॐ॥ ॥ अ
धिकारविशेषेणभक्तिज्ञानसुखादिभिः॥विशेषोदेवतादीनांमोक्षेचैवविशेषतः ॥ ॐअक्षरधियांत्वविरोधःसा
मान्यतद्भावाभ्यामौपसदवत्तदुक्तंॐ॥॥नतावताविरोधोस्तिनिर्दोषत्वात्समस्तशः॥आभासत्वात्परेषांतदव
राणांचसर्वशः॥ यतोवराणांसर्वेपिगुणाःसर्वाःक्रियाअपि॥नियमेनैवपूर्वेषांसुप्रसादनिबंधनाः ॥अतःसच्छि
ष्यवत्तेषांनैवेर्ष्यादिःकथंचन॥ नचसंसारिदेवानांकालेयत्तापरेइमे ॥सूत्रेह्यारब्धमात्रस्यभोगेनैवक्षयोध्रुवः॥
अनारब्धस्यभोगेनत्वितरेइतिचोदितः ॥ पौनरुक्त्येनतेनैतेउक्तार्थेइतिनिश्चयः॥२०॥ ॥ ॐइयदामननात्
ॐ॥ ॥उषास्स्वाहाचपर्जन्योमित्रोग्निर्वरुणोविधुः॥ प्रवहोनिरुद्धइंद्रोमेरुद्रोवाणीचमारुतः॥ उत्तरोत्तरतस्त्वेते
गुणैःसर्वैश्चमुक्तिगाः॥सूर्यधर्मौयथासोमोमनुर्दक्षोबृहस्पतिः॥शचीरतिश्चानिरुद्धसमास्ताराचमित्रवत्॥सो

मवच्छतरूपातुप्रसूतिर्वह्निवद्विराट्॥पर्जन्यवद्वारुणीचतथासंज्ञाचरोहिणी।धार्मीचमित्रवत्त्वेवप्रावहीपरिकी
र्तिता ॥ मित्रपर्जन्यमध्यस्थावश्विनौविघ्नवित्तपौ ॥ भृगुरग्निसमोमित्रतन्मध्येब्रह्मपुत्रकाः ॥वरुणाग्न्यंतरा
तत्रनारदःप्रायइंद्रवत् ॥ कामःसुपर्णीचोमावद्धींद्रोरुद्रवदीरितः॥ निर्ऋतिर्मित्रसदृशोविश्वामित्रःकसूनुवत्॥
वैवस्वतोमनुश्चाश्विपश्चादन्येततोवराः॥च्यवनोचथ्यवैन्याश्चशशबिंदुश्चहैहयः ॥ तद्वच्चविप्रराजन्यविशेषो
त्रापिकश्चन ॥ तद्वत्प्रियव्रतश्चापितदन्याःशतदेवताः ॥ पर्जन्यमित्रांतरालेतदन्येतुततोवराः ॥ एतेभ्योभ्य
धिकाश्रीस्तुसदामुक्ताविशेषतः॥ तत्समोनास्तिपरमोहरिरेवनचापरः॥ संहितायांबृहत्यांतुस्वयंभगवतोदि
तं ॥ तदेतदखिलंप्राणआहंकारिकएवच॥इंद्रादनंतरो॥२१॥ ॐप्रज्ञांतरपृथक्त्ववद्दृष्टिश्चतदुक्तंॐ ॥ ॥ दृ
ष्टिरपियोग्यानुसारतः ॥२२॥ ॥ॐप्रदानवदेवतदुक्तंॐ॥ ॥ ॐलिंगभूयस्त्वात्तद्धिबलीयस्तदपिॐ॥ ॥स
म्यग्गुरुप्रसादश्चमुख्यतोदृष्टिकारणं ॥ श्रवणादिचकर्तव्यंनान्यथादर्शनंक्वचित्॥२६॥२७॥॥ॐपूर्वविकल्पः
प्रकरणात्स्यात्क्रियामानसवत्ॐ॥ ॥ गुणाधिकंगुरुंप्राप्यतद्धीनंनाप्नुयात्क्वचित् ॥ विपर्ययस्तुकर्तव्यःसर्वथा ॥२१३॥
शुभमिच्छता ॥ समेविकल्पएवस्यात्पूर्वानुज्ञाचसर्वथा ॥तदुत्तमगुरुप्राप्त्यैपूर्वानुज्ञानमृग्यते॥गुरुर्ब्रह्माखिला

नांचविद्याचैवसरस्वती ॥ देवताभगवान्विष्णुःसर्वेषामविशेषतः॥तत्प्रसादेनमुक्तिःस्यान्नान्यथातुकथंचन॥
स्वोत्तमास्तुक्रमेणैवसर्वेषांगुरवःस्मृताः ॥ उपदेशोब्रह्मणस्तुसर्वेषामेवमुक्तये॥२८॥ ॥ ॐपरेणचशब्दस्यताद्वि
ध्यंभूयस्त्वात्त्वनुबंधःॐ॥॥ साधनेभ्योधिकाभक्तिर्नैवान्यत्तादृशंक्वचित् ॥ भक्तिश्चैवहरावेवमुख्यान्यत्रयथा
क्रमं ॥ स्वाधिकत्वेनसर्वत्रस्वोत्तमेषुक्रमेणच ॥ अनुवर्ततेचसाभक्तिर्मुक्तावानंदरूपिणी॥ तत्पूर्विकोपासनैवं
कर्तव्यामुक्तयेगुणैः ॥३४॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेतृतीया
ध्यायस्यतृतीयःपादः ॥ ३ ॥ ३ ॥ ॥ ॥ ॥ ॥
॥ ॥ ॐपुरुषार्थोतःशब्दादितिबादरायणःॐ॥ ॥ एवमुत्पन्ननिर्दोषभगवद्दर्शनात्सदा॥अपेक्षितफलप्राप्ति
रारब्धस्यानतिक्रमात् ॥ देवर्षिमानुषादीनांतत्तज्जात्यनुसारतः ॥ जैमिन्युक्तंमानुषाणांतद्विशेषाश्चकेचन॥
सामान्यंभगवत्प्रोक्तंदेवादीनांविशेषतः ॥ बलवद्विरोधिसद्भावेजैमिन्याद्युक्तिरिष्यते ॥१॥ ॥ ॐस्तुतयेनुम
तिर्वाॐ॥ ॥ विकर्मलेपोनैवास्तिसम्यग्दृष्टिमतांक्वचित् ॥ गुणहानिश्चनैवास्तिब्रह्मणस्त्वविकर्मतः ॥ देवा
नामपिनप्रायःक्लृप्तस्यतुकथंचन ॥ प्राप्तह्रासोभवेत्क्वापिमहतातुविकर्मणा ॥ तथापितत्क्लृप्तमेवतस्मान्ननियमो

अनु ॥ ५४ ॥

ज्झितिः ॥ चंद्रसुग्रीवयोश्चैवस्वोच्चदारपरिग्रहात् ॥ प्राप्तहानिरभून्नैवक्कप्तहानिःकथंचन ॥ ह्रासोपिमानुषादी नामानंदस्यविकर्मणा ॥ भवेन्मुक्तौविशेषेणस्वोच्चानामपराधतः॥ ॥ ॐकामकारेणचैकेॐ ॥ ॥ ज्ञानोत्तर स्यपापस्यचतुर्थेऽलेपउच्यते॥अशुचित्वादिकंचास्यनभवेदितितत्फलं॥अत्रज्ञानफलस्यैवमुक्तेर्नियततोच्यते ॥ ॥ ॐउपमर्दंचॐ ॥ ॥प्रारब्धकर्मजस्यैवविषभक्षान्मृतेरिव॥प्राप्तस्याप्यनिवर्त्यस्यकिंचिद्भुक्तस्यसंविदा॥उ पमर्दइहप्रोक्तोदेवादीनांयथाक्रमः॥सर्वात्मनात्वभोगोहिप्रारब्धस्यैवकर्मणः ॥ नब्रह्मदर्शिनोपिस्यात्फलह्रास स्तुविद्यते॥ सर्वात्मनाफलह्रासोयदिनारब्धकर्मणः॥ स्यात्काम्यविधिवैयर्थ्यमित्युक्तनियमोभवेत् ॥ एवमा द्यपिसंप्रोक्तंतंत्रभागवतेस्फुटं॥तारतम्यंफलेनोचेद्ब्रह्मादीनांकथंश्रुतिः॥ अवृजिनोकामहतइतिमुक्तिंनिगद्य च॥आनंदतारतम्यंचतेषांब्रूयात्पृथक्पृथक्॥ संसारएवचेदेतत्तारतम्यंनमुख्यतः॥अकामाहतशब्दार्थोऽवृजि नत्वंचनोभवेत्॥कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधि। इतियल्लक्षणंमुक्तेःश्रुतिराहबलीयसी॥कामाहतिः कुतोन्यत्रप्राप्तकामस्यसाभवेत्।अप्रयत्नेनकामानामवाप्तिःसायदाभवेत्। तदैवाकामहतताकुतएवान्यथाभवे त्॥चेतनस्यत्वसुप्तस्यकुत्रदृष्टाह्यकामता ॥अव्यक्तिरेवकामानांननाशोमोहसुप्तयोः ॥ यत्कामःस्वापमाप्नोति

व्याख्या. ३।४

॥२१४॥

तदेवोत्थापितःपुनः॥अवशोपिव्याहरतिकुतःसुप्तावकामता ॥ सर्वकामानवाप्नोतिब्रह्मणासहमुक्तिगः॥ पर्ये
तितत्रजक्षंश्चक्रीडन्रतिमवाप्नुयात् ॥ कामान्नीकामरूपीसन्निमाँल्लोकांश्चसंचरन् ॥ आस्तेगायन्साममुक्तइ
त्यादिश्रुतिसद्बलात् ॥ अकामस्स्यात्कथंमुक्तःकामायेस्यहृदिश्रिताः ॥ इत्यंतःकरणस्थानांकामानांमोक्षमेव
हि ॥ आहश्रुतिर्हृदीत्येवनचेद्व्यर्थविशेषणं ॥ हृद्येवतेषांश्रयणमितिपक्षोनभासते ॥ मुक्तानांकामितामाहपृ
थक्शाखासुयच्छ्रुतिः॥ अतोकामहतत्वंतुमुक्तानामेवमुख्यतः॥ मुख्यार्थस्यवृथात्यागोमायिनामेवभूषणं॥
अपापत्वमदुःखंत्वंचाव्रजिनत्वमिहोदितं ॥ अप्रियंवृजिनंदुःखमकंतोदइतीर्यते ॥ तत्कारणत्वात्पापंवावृजि
नंनामकथ्यते ॥ इत्युक्तःस्वयमीशेननामार्थःशब्दनिर्णये ॥ अपापत्वंचनैवास्तियावत्संसारमस्यहि॥ आर
ब्धपापमस्त्येवदुःखंचज्ञानिनोपिहि ॥ तस्मात्तस्मादकामत्वमितिचाश्रुतकल्पना॥अकामहतइत्युक्तेश्श्रुतहा
निरपिस्फुटा॥ कुत्रचित्कामिनःपुंसःकामाभावात्क्वचित्क्वचित्॥ इंद्रादिसुखभोगोस्तीत्यनुभूतिर्हिकुप्यति॥
तस्मादमुक्तसुखगंतारतम्यंपृथक्पृथक्॥उक्त्वायश्चेतिमुक्तानांतारतम्यंसुखेश्रुतिः॥ आहेतिपेशलंतच्चचश
ब्दादेवगम्यते॥ राद्धःसंसिद्धइत्येवमुक्तएवावगम्यते ॥ साधुनाविष्णुनायुक्तोमुक्तःसाधुयुवामतः ॥ यौवनं

अनु ॥५५॥ व्याख्या- ३।४

नित्यमेतस्यमुक्तस्येतियुवासच ॥ फलमध्ययनस्यास्तंतेनाध्यायकईरितः ॥ निर्ह्रासानंदसंप्राप्त्याचाशिष्ठइ
तिगीयते॥स्थितस्यानन्यथाप्राप्तेर्दृढिष्ठइतिचोदितः॥ बलिष्ठश्चस्वभावेनमुक्तोभवतिकेवलं॥ तस्येयंपृथिवी
त्यादिपूर्वभावव्यपेक्षया॥सएकइतिसंसारगतमुक्त्वासुखंपुनः॥श्रोत्रियस्येतिवदतिमुक्ताच्छतगुणात्मतां॥
संसारगाच्चसंसारगतस्यैवशताधिकं॥ मुक्तान्मुक्तस्ययुक्तंस्याच्छ्रुत्युक्तमभिवीक्षतः॥युक्तंचसाधनाधिक्या
त्साध्याधिक्यंसुरादिषु॥नाधिक्यंयदिसाध्येस्यात्प्रयत्नःसाधनेकुतः॥ यत्नश्चदृश्यतेतेषांमहानेवमहात्मनां॥
यत्रसाधनबाहुल्यंसाध्यबाहुल्यमत्रच॥ दृष्टंनियमतोनोचेन्नयत्नंकुर्युरंजसा॥ कृच्छ्रेणसाधनादेवनमुक्तवदु
दीर्यते॥ दशकल्पंतपश्चीर्णंरुद्रेणलवणार्णवे॥त्यक्त्वासुखानिसर्वाणिक्लिष्टेनलवणांभसा॥ शक्रेणवर्षको
टीश्चधूमःपीतोतिदुःखतः॥ वर्षायुतंचसूर्येणतपोर्वाक्शिरसाकृतम्॥ सुदुःखेनसुखंत्यक्त्वाधर्मेणाकाश
शायिना॥ पीतामरीचयोवर्षसाहस्रमतिसादरं॥अतिकृच्छ्रेणकुर्वंतियत्नंब्रह्मविदोपिच॥ इत्येतदखिलंमो ॥२१५॥
क्षविशेषाभावतःकथं॥ दैवीसंपद्विमोक्षायनिबंधायासुरीमता॥इतिमोक्षविशेषश्चस्वयंभगवतोदितः॥ त
मेवयूयंभजतात्मवृत्तिभिर्मनोवचःकायगुणैःस्वकर्मभिः॥अमायिनःकामदुघांघ्रिपंकजंयथाधिकारावसितार्थ

सिद्धये ॥ अक्षण्वंतःकर्णवंतःसखायोमनोजवेष्वसमाबभूवुः ॥ आदघ्नासउपकक्षासउत्वेहृदाइवस्नात्वाउत्वे
दद्दश्रे ॥ इत्यादीनिचवाक्यानितारतम्यंविमुक्तिगं ॥ व्यक्तंवदंतितत्केनसाम्यंमुक्तेषुगम्यते ॥ दुःखाद्यभाव
साम्यंचसाम्यवाक्यार्थईयते॥भक्त्यादिगुणसद्भावेह्यतुल्यत्वंचभारते॥उक्तंसाधनवैचित्र्यमपिसर्वत्रकथ्यते॥
दुर्ज्ञेयंघोररूपस्यत्रैलोक्यध्वंसिनःप्रभोः ॥ दैवतैर्मुनिभिःसिद्धैर्महायोगिभिरेवच ॥ नित्ययुक्तैर्महाभागैर्विमो
हक्लेशसाध्वसैः ॥ महोत्साहैर्महाधैर्यैःसत्त्वस्थैर्व्यवसायिभिः ॥ अतीतानागतज्ञानप्रभवाप्ययवेदिभिः ॥ शौ
चस्वाध्यायसंतोषतपःसत्वदयान्वितैः ॥ किमुमर्त्यैर्भयभ्रांतिध्वंसमोहरुजान्वितैः ॥ अल्पायुर्वीर्यधीसत्त्वव्य
वसायश्रुतिव्रतैः ॥ कस्तंमदामदंदेवंमदन्योज्ञातुमर्हति ॥ ब्रह्मैवकिंचिज्जानातिनतदन्योहिकश्चन ॥ मुक्ता
नामपिसिद्धानांनारायणपरायणः ॥ सुदुर्लभःप्रशांतात्माकोटिष्वपिमहामते ॥ इयंविसृष्टिर्यतआबभूवय
दिवादधेयदिवान ॥ योअस्याध्यक्षःपरमेव्योमन्त्सोअंगवेदयदिवानवेद ॥ यःस्वात्ममायाविभवंस्वयंगतो
नाहंनभस्वांस्तमथापरेकुतः ॥ ब्रह्मापियंवेत्तिनचेहसम्यगन्येकुतोदेवमुनींद्रमर्त्याः॥नमस्तेमितितत्त्वायब्रह्मा
दीनांचसूतये ॥ निर्गुणायचसत्काष्ठांनाहंवेदापरेकुतः ॥ नाहंपरायुर्ऋषयोनमरीचिमुख्याजानंतियद्विरचि

अनु व्याख्या.

॥ ५६॥ ३ । ४

तंखलुसत्त्वसंघाः॥ यन्माययामुषितचेतसईशदैत्यमर्त्यादयःकिमुतशश्वदभद्रवृत्ताः॥अहंमहेंद्रोनिर्ऋतिःप्रचे
ताःसोमोग्निरीशःपवनोर्कोविरिंचः।आदित्यविश्वेवसवोथसाध्यामरुद्गणारुद्रगणाःससिद्धाः॥ अन्येचयेविश्व
सृजोमरेशाभृग्वादयोस्पृष्टरजस्तमस्काः ॥ यस्येहितंनविदुःस्पृष्टमायाःसत्त्वप्रधानाअपिकिंततोन्ये।सर्वस्या
दौस्मृतोब्रह्मातस्माद्देवादनंतरः॥ जानातिदेवप्रवरंभूयश्चातोधिकंनृप॥नत्वामतिशयिष्यंतिमुक्तावपिकथं
चन॥ मद्भक्तियोगाज्ज्ञानाच्चसर्वानतिशयिष्यसि॥यथाभक्तिविशेषोत्रदृश्यतेपुरुषोत्तमे॥ तथामुक्तिविशेषो
पिज्ञानिनालिंगभेदने॥ सायुज्यंसमनुप्राप्ताअपिदेवादयोखिलाः॥तारतम्याद्धितिष्ठंतितारतम्यंहिसाधने॥
मनुष्याणांसहस्रेषुकश्चिद्यततिसिद्धये॥यततामपिसिद्धानांकश्चिन्मांवेत्तितत्त्वतः॥ यइमंपरमंगुह्यंमद्भक्तेष्व
भिधास्यति ॥ भक्तिंमयिपरांकृत्वामामेवैष्यत्यसंशयः॥ नचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमः॥भविताम
चमेतस्मादन्यःप्रियतरोभुवि ॥ अध्येष्यतेचयइमंधर्म्यंसंवादमावयोः ॥ ज्ञानयज्ञेनतेनाहमिष्टःस्यामितिमेम
तिः॥ श्रद्धावाननसूयश्चशृणुयादपियोनरः ॥ सोपिमुक्तःशुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणा ॥ ध्यानेनात्म ॥२१६॥
निपश्यंतिकेचिदात्मानमात्मना॥ अन्येसांख्येनयोगेनकर्मयोगेनचापरे॥ अन्येत्वेवमजानंतःश्रुत्वान्येभ्य

उपासते ॥ तेपिचातितरंत्येवमृत्युंश्रुतिपरायणाः ॥ सुसूक्ष्मैरप्यशेषैश्चविशेषैःसहपश्यति ॥ स्वात्मानंभगवा
न्विष्णुःसर्वरूपोपिसर्वदा ॥ सर्वत्रचान्यदप्येवंतेनादृष्टंनहिक्कचित् ॥ सर्वत्रसर्वदैवेशंपश्यत्येवरमापितु ॥ नतु
सर्वैर्विशेषैस्तंपश्यंत्यप्यन्यतोधिकं॥स्वात्मानमन्यच्चाशेषंपश्यत्येवहिसर्वदा ॥ब्रह्मातुसर्वगंपश्येद्गुणानप्यन्यतो
धिकं ॥ नतुसर्वेषुकालेषुतथापश्यत्यमुक्तिगः ॥ मुक्तस्तुसर्वदापश्येत्सर्वगत्वेनचापितु ॥ नरमावद्विशेषाणांद
र्शनंशक्नुयात्कचित्॥स्वात्मानमन्यच्चसदाविशेषैरखिलैरपि॥पश्यत्यंजस्तथावाणीविशेषांस्तावतोनतु ॥ त्रैगु
ण्यात्परतःपश्येद्यास्शंशतगुणंहरिं॥गिरिशोगरुडश्चैवतमोमात्रगतंहरिं ॥पश्येद्विशेषानपिहिवाणीदृष्टान्नपश्य
ति ॥ उमासुपर्णीचमहत्तत्वंयावत्प्रपश्यति ॥ रुद्रदृष्टान्विशेषांश्चनैवपश्येत्कदाचन ॥ स्वरूपमन्यरूपंचमुक्ता
देवाःसमस्तशः॥जानंतींद्रश्चकामश्चब्रह्मयावदहंकृतिः॥पश्यंतोमनुदक्षाद्याबुद्धितत्त्वस्थितंहरिं॥ पश्यंतिसो
मसूर्यौतुमनस्स्थंपरमेश्वरं॥अन्येभूतस्थितंविष्णुंदेवाःपश्यंतिसर्वदा॥बहुसाहस्रवर्षेणमहत्तत्त्वेक्कचित्क्कचित् ॥
अन्येचैवयथायोगमंडांतर्वर्तिनंहरिं।श्वेतद्वीपपतिंचैवहृद्येवान्येतुकेचन।कदाचिदेवतत्रापिकेचित्पश्यंतिकेश
वं॥उमायावदनंतांशान्पूर्वदृष्टेभ्यएवतु॥विशेषान्वासुदेवस्यपश्चादुक्ताविचक्षते ॥ शक्रकामादयश्चैवविशेषा

अनु ॥५७॥

न्ब्रह्मणिस्थितान्॥ उमादिभिःप्रबुद्धेभ्यःशतांशानेवचक्षते॥ इत्यादिवेदस्मृतिगवचनेभ्योयथार्थतः॥ तारत
म्यंचमुक्तानांसाधनानांचदृश्यते ॥ साध्यसाधनवैरूप्यमदृष्टंकेनकल्प्यते ॥ वैषम्यंनिर्घृणत्वंचतेनस्यातांपर
स्यंच ॥ सापेक्षत्वादितिचतौविद्याधीशेनवारितौ ॥ तारतम्यात्साधनानांसाध्यतादृक्त्वमीशतः ॥ अवैष
म्यादिहेतुःस्यात्सदैवपरमेश्वरे॥स्वातंत्र्येविद्यमानेपिसाधनादौपरेशितुः॥अपेक्ष्यानादिवैचित्र्यंनदोषइतित
द्वचः ॥ नानादित्वादितिह्युक्तमुपपद्यतइत्यपि ॥ अपेक्ष्योपायवैषम्यमुपेयस्यतथास्थितिः॥ मयाकयाविरु
द्धास्याद्राजादावपिदृश्यते ॥ त्यागोदृष्टस्यचादृष्टकल्पनेतिसुदुष्करौ ॥ मायिभ्योन्येनकेनापितत्किमन्यैश्च
वादिभिः॥ मायिनोत्रानुगम्यंतेश्रुतहान्यश्रुतग्रहौ ॥ अप्यत्रमायिनांलिंगेतत्केदोषास्ततोधिकाः ॥ निःशेष
गतदोषाणांबहुभिर्जन्मभिःपुनः ॥ स्यादापरोक्ष्यंहिहरेर्द्वेषेर्ष्यादिस्ततःकुतः ॥ भवेयुर्यदिचेर्ष्याद्याःसमेष्व
पिकुतोनते॥तप्यमानाःसमान्दृष्ट्वाद्वेषेर्ष्यादियुताअपि ॥ दृश्यंतेबहवोलोकेदोषाएवात्रकारणं ॥ यदिनिर्दोष
तातत्रकिमाधिक्येनदूष्यते॥यद्यन्यदर्शनाभावादीर्ष्यादिर्विनिवार्यते ॥ अदर्शनादरत्यादिःकथंतेननिवार्य
ते ॥ ब्रह्मणोप्यरतिर्दृष्टापूर्वमेकाकिनःश्रुतौ ॥ नैवरेमेसचैकाकीतस्मान्नरमतेक्वचित् ॥ द्वितीयमैच्छत्तेनासा

व्याख्या० ३।४ ॥२१७॥

वितिश्रुतयऊदिरे ॥ यदीच्छानैवतत्रास्तीत्येवतत्कल्प्यतेमृषा ॥ श्रुत्युक्तनिर्दोषतैवंकिंनागीक्रियतेस्वयं ॥ता
रतम्यंचकामंचश्रुतमेवातिहायतु॥अश्रुतासमताकेनकल्प्यतेयुक्तिमानिना ॥किंतन्मानंसमत्वेतेमुक्तानामु
पलभ्यते ॥ वृथायमाग्रहःकेनश्रुतहान्यश्रुतग्रहे ॥ मोक्षेपितारतम्येतश्चेतनत्वाद्यथापुरा ॥ इत्युक्तउत्तरंकिंते
कल्पनामात्रवादिनः ॥ नचदुःखादिकंकल्प्यंनिर्दुःखत्वश्रुतेर्बलात्॥ शोकंतरत्यात्मवेत्तातीर्णःसर्वानदुःखभा
क् ॥ येनानंद्येवभवतिनशोचतिकदाचन ॥ किल्बिषस्पृत्पितुषणिररंहितइहेश्वरः ॥ यंयमंतमभिप्रेप्सुःससंक
ल्पाद्भवेदिह ॥ इत्यादिश्रुतयोमानंनिर्दुःखत्वादिसंपदि ॥ अतोदुःखाद्यनुमयानावकाशोत्रलभ्यते ॥ तारत
म्यानुमातस्माद्भवेन्नातिप्रसंगिनी।श्रुतियुक्तिबलादेवतारतम्यंविभाव्यते।मुक्तावपिततःकेत्रविरोधंकर्तुमीश
ते ॥ ४ ॥ ॥ ॐसर्वथापितुतएवोभयलिंगात्ॐ ॥ ॥ ५ ॥ ॥ ॐनचाधिकारिकमपिपतनानुमानात्तदयो
गात्ॐ ॥ ॥ ६ ॥ अनादियोग्यतांचैवकलिवाणीश्वरावधिं ॥ कोनिवारयितुंशक्तोयुक्त्यागमबलोद्धतां ॥ ब्र
ह्मणोन्यतआधिक्ययुक्तःकालोविवादवान् ॥ कालोह्ययंयथेत्यादिमानुमामानिनोभवेत् ॥ अन्यशब्दोहरिश्री
स्वसमेभ्योन्यविवक्षया ॥ प्रयुक्तोनैवदोषायरुद्रादिषुचयुक्तितः ॥ उत्तमत्वंतुमुक्तानामपिनब्रह्मणोभवेत् ॥ व्य

अनु क्तिः सुखस्यतुभवेन्नत्वाधिक्यंसुखस्यच ॥ बलज्ञानाधिकत्वंतुतेभ्योहिब्रह्मणःसदा ॥ आधिक्यस्यत्वनित्यत्वेन व्याख्या.
॥ ५८ ॥ किंचिन्मानमीयते ॥ शृण्वेवीरउग्रमुग्रंदमायन्नन्यमन्यमतिनेनीयमानः ॥ एधमानद्विळुभयस्यराजाचोष्कूय ३ । ४
तेविशइंद्रोमनुष्यान्।परापूर्वेषांसख्यावृणक्तिवितर्तुराणोअपरेभिरेति॥अनानुभूतीरवधून्वानःपूर्वीरिंद्रःशर
दस्तर्तरीति ॥ दिवेदिवेसदृशीरन्यमर्धंकृष्णाअसेधदपसद्मनोजाः॥अहंदासावृषभोवस्नयंतोदव्रजेवर्चिनंशंब
रंच॥तंभूतिरितिदेवाउपासांचक्रिरेतेबभूवुस्तस्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसित्यभूतिरित्यसुरास्तेहपरा
बभूवुः॥ तद्यथापेशस्करीपेशसोमात्रामुपादायान्यन्नवतरंकल्याणतरंरूपंतनुते॥ एवमेवायमात्मेदंशरीरंनि
हत्याविद्यांगमयित्वान्यन्नवतरंकल्याणतरंरूपंकुरुते॥ पित्र्यंवागांधर्ववंवादैवंवाप्राजापत्यंवाब्राह्मंवान्येषांभूता
नां ॥ प्रयांतिपरमांसिद्धिमैहिकामुष्मिकींद्रुतं ॥ यानप्राप्यासुरैःसर्वैरक्षय्याक्लेशवर्जिता ॥ नतांगतिंप्रपद्यं
तेविनाभागवतान्नरान् ॥ अवजानंतिमांमूढामानुषींतनुमाश्रितं ॥ परंभावमजानंतोममभूतमहेश्वरं ॥ मो
घाशामोघकर्माणोमोघज्ञानाविचेतसः ॥ राक्षसीमासुरींचैवप्रकृतिंमोहिनींश्रिताः ॥ महात्मानस्तुमांपार्थदै ॥२१८॥
वींप्रकृतिमाश्रिताः ॥ भजंत्यनन्यमनसोज्ञात्वाभूतादिमव्ययं ॥ अभयंसत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥

दानंदमश्चयज्ञश्चस्वाध्यायस्तपआर्जवं ॥ अहिंसासत्यमक्रोधस्त्यागश्शांतिरपैशुनं ॥ दयाभूतेष्वलोलुत्वंमार्द
वंह्रीरचापलं ॥ तेजःक्षमाधृतिःशौचमद्रोहोनातिमानिता ॥ भवंतिसंपदंदैवीमभिजातस्यभारत ॥दंभोदर्पो
भिमानश्चक्रोधःपारुष्यमेवच ॥ अज्ञानंचाभिजातस्यपार्थसंपदमासुरीं ॥ मामात्मपरदेहेषुप्रद्विषंतोभ्यसूय
काः ॥ तानहंद्विषतःक्रूरान्संसारेषुनराधमान् ॥ क्षिपाम्यजस्रमशुभानासुरीष्वेवयोनिषु ॥आसुरींयोनिमाप
न्नामूढाजन्मनिजन्मनि ॥ मामप्राप्यैवकौंतेयततोयांत्यधमांगतिं ॥ द्विविधोभूतसर्गोत्रदैवआसुरएवच ॥वि
ष्णुभक्तिपरोदैवोविपरीतस्तथासुरः ॥ देवानांपरमोधर्मःसदायज्ञादिकाःक्रियाः॥स्वाध्यायस्तत्त्ववेदित्वंविष्णु
पूजारतिःस्मृतिः॥दैत्यानांबाहुशालित्वंमात्सर्यंयुद्धसक्रिया॥नीतिशास्त्रप्रवेदित्वंशिवपूजारतिःस्मृतिः। व
र्णाश्रमाचारवत्त्वंस्वाध्यायोभक्तिरच्युते।शिवेसूर्येतथादेव्यांस्वभावोमानुषःस्मृतः॥अनादिवैष्णवाएवदेवता
स्तुस्वभावतः॥विपरीताःस्मृतादैत्याःसदैवानादिकालतः॥मानुषामिश्रमतयोविमिश्रगतयोपिच ॥ इत्यादि
वाक्यसंदर्भैर्ज्ञायतेनादियोग्यता।यद्यनादिविशेषोनसांप्रतंकथमेवसः॥अदृष्टादेवचादृष्टंस्वीकृतंसर्ववादिभिः
॥आकस्मिकोविशेषश्चेददृष्टेक्वचिदिष्यते ॥ सर्वत्राकस्मिकत्वंस्यान्नादृष्टापेक्षताभवेत् ॥ अदृष्टाच्चेद्विशेषोयं

मनादित्वंकुतोनतत् ॥ नचान्यभेदवद्विष्णौभेदस्तद्दर्शिनामपि ॥ दृश्यतेप्रत्यभिज्ञैवबहुरूपेषुदृश्यते ॥ बहु
त्वंचविशेषेणनभेदेनकथंचन ॥ प्रत्यभिज्ञाचयेषांनतेपितन्मुष्टदृष्टयः ॥ भेदंनैवप्रपश्यंतिभेदमन्येभ्यएवच ॥
पश्यंत्येवंहरिस्तेषांसंदर्शयतिनान्यथा ॥ एवंबृहत्संहितायांवचनंनपुराणगं ॥ लोकदर्शनवाद्येववेदरोधायश
क्नुयात् ॥ अपरीक्षितदृष्टिश्चपरीक्षापूर्वदर्शनं ॥ निषेद्धुंशक्नुयात्क्वापिदेवदत्तादिदृष्टिवत् ॥ नचनिश्चितभेद
स्यदर्शनेस्तिपुराणगं ॥ वाक्यंक्वचिद्धिसंमुग्धंदर्शनंतत्रगम्यते ॥ अपरीक्षितमेवात्रवेधादिकमधीशितुः ॥
परीक्षादर्शनेनैवदृश्यतेकेनचित्क्वचित् ॥ निर्दोषमेवतंब्रह्मादद्दर्शाशेषरूपिणं ॥ निर्दोषमेवरुद्रोद्राङ्गिर्दोषंतंपुरंद
रः ॥ निर्दोषाण्यस्यरूपाणिदृष्टान्येवंसुरोत्तमैः ॥ अन्येसदोषाःसर्वेपिनिर्दोषोहरिरेकलः ॥ इतिबर्कश्रुतेश्चै
वसदोषंनास्यदर्शनं ॥ अविद्धोविद्धवद्विष्णुरजातोजातवन्मृषा ॥ अबद्धोबद्धवच्चैवदर्शयत्यमितद्युतिः ॥
इतिपैंगिश्रुतिश्चैवप्राहनिर्दोषतांहरेः ॥ अपरीक्षितदृष्ट्यैवसदोषोदृश्यतेहरिः ॥ परीक्षादर्शनेनैवदोषोदृश्यो
हरेःक्वचित् ॥ इतिपैंगिश्रुतिश्चाहप्रमाणंहिपरीक्षितं ॥ नपरीक्षानवस्थास्यात्साक्षिसिद्धेत्वसंशयात् ॥ मान
सेदर्शनेदोषाःस्युर्नवैसाक्षिदर्शने ॥ सुदृढोनिर्णयोयत्रज्ञेयंतत्साक्षिदर्शनं ॥ इच्छाज्ञानंसुखंदुःखंभयाभयकृपा

दयः ॥ साक्षिसिद्धानकश्चिद्धितत्रसंशयवान्कचित् ॥ यत्कचिद्व्यभिचारिस्याद्दर्शनंमानसंहितत् ॥ मनश्च
क्षुर्दर्शनादेरपियत्रैवसाक्षिणा ॥ प्रामाण्यंसुगृहीतंस्यात्ततपरीक्षितदर्शनं ॥ नज्ञानदृष्टिमात्रेणप्रामाण्यंतस्य
दृश्यते ॥ नियमेनसुखाद्येषुप्रामाण्यंसाक्षिगोचरं ॥ स्वप्रामाण्यंसदासाक्षीपश्यत्येवसुनिश्चयात् ॥ ज्ञानस्य
ग्राहकेणैवसाक्षिणामानतामितेः ॥ दोषाभावेप्रमाणत्वंदोषाभावस्यसाक्षिणा ॥ निश्चितत्वंक्कचिच्चैवस्वतःप्रा
माण्यमिष्यते ॥ अतोनसर्वमानानांप्रामाण्यंनिश्चितंभवेत् ॥ साक्षिणानिश्चितंयत्रतत्प्रामाण्यंस्वलक्षणं ॥
नहिकश्चित्सुखाद्येषुसंशयंकुरुतेजनः ॥ नचैवाखिलमानानिनिश्चिनोत्यखिलोजनः॥तस्मादनुभवारूढंकिं
मर्थमपलप्यते ॥ दोषाभावादिकंचैवसाक्षीसम्यक्प्रपश्यति ॥ तत्परीक्षितमानेननदोषोविष्णविक्कचित् ॥ अ
परीक्षितदृष्टिस्तुकस्मिन्नर्थेनविद्यते ॥ तत्प्रत्यक्षविरुद्धार्थेनागमस्यापिमानता ॥उपजीव्यमक्षजंयत्रतदन्यत्र
विपर्ययः ॥ लौकिकेव्यवहारेत्रप्रत्यक्षस्योपजीव्यता ॥ अवतारादिदृष्टौस्यादागमस्योपजीव्यता ॥ आगमे
नहिविष्णुत्वंज्ञात्वादोषोत्रकल्प्यते ॥ नचेत्स्याद्दोषवानन्यःशास्त्रसिद्धंहिलक्षणं ॥ कस्यचिद्दोषवत्त्वंस्यादि
तिमात्रेक्षजंभवेत्॥ नविष्णोर्दोषवत्त्वेहिप्रत्यक्षंवर्ततेस्वतः ॥ केचित्पश्यंतिदोषानित्यत्रापिस्यान्नचाक्षजं ॥

पौराणंवाक्यमेवात्रतच्छ्रुत्यैवविरुध्यते ॥ पुराणस्योपजीव्यश्चवेदएवनचापरः॥ तद्विरोधेकथंमानंतत्तत्रचभ
विष्यति ॥ अपरीक्षितदृष्टिश्चकथमेवाक्षजंभवेत् ॥ यद्येवंदेवदत्तादिभ्रमःकिंनाक्षजंभवेत्॥यावच्छक्तिपरीक्षा
यामुपजीव्यस्यबाधने ॥ दोषोनाशोधितेदोषउपजीव्यत्वमस्खलं॥भ्रमेप्यभ्रमभागोस्तितन्मात्रमुपजीव्यहि ॥
बाधकज्ञानवृत्तिस्स्यान्नचैवंसुपरीक्षिते।सर्वंतदुपजीव्यैवप्रमाणंवर्ततेयतः। कथंब्रह्मेतितज्ज्ञेयंसर्वज्ञत्वादिलक्षणं
॥विहाययस्मात्कस्माच्चित्स्वरूपस्यैवचेद्यदि ॥ उपजीव्यत्वमेतस्माद्व्यावृत्तंयावताभवेत् ॥ तावतैवोपजीव्यत्वं
स्वरूपस्यैवनक्कचित् ॥ सर्वलक्षणयुक्तंचस्वरूपंयदिभण्यते॥अस्तुनोनैवहानिःस्यात्स्वपक्षश्चायमंजसा॥यस्मा
दन्वितएवार्थःशब्दानामपिसर्वशः ॥ विशेषसामान्यतयास्वरूपमखिलंभवेत् ॥ पुरोवर्तित्वपूर्वाणिदेवदत्ता
दिकभ्रमे ॥ व्यावर्तयंतितद्रूपंचैत्रमात्राद्भिनैवतु ॥ ब्रह्मणोनिर्विशेषत्वाद्व्यावर्तयतिकिंपुनः ॥ यस्मात्कस्मा
च्चिदप्यर्थात्तावच्चेत्सिद्धसाधनं ॥ चिन्मात्रत्वंचनैवेष्टमविशेषत्ववादिनः॥तावन्मात्रंयदीष्टंस्यात्सर्वज्ञत्वंकुतो
नतत्॥चिन्मात्राभेदसाध्येपिसिद्धंतत्प्रतिवादिनः॥ स्वाभेदांगीकृतेरेवचित्त्वंस्वस्यापियन्मतं ॥ सर्वापेक्षतया ॥२२०॥
सर्वज्ञत्वमित्येवतन्नहि ॥इतिचेच्चेतनत्वंचज्ञत्वंनज्ञेयवर्जितं॥स्वज्ञेयत्वंचनैवासौमन्यतेसविशेषतः॥ स्वशब्दोपि

परापेक्षस्तस्माद्व्यावृत्तिरेवहि॥स्वशब्दार्थइतिप्रोक्तःस्वरूपंनामकिंनचेत्॥ रूपशब्देनपूर्णत्वात्तच्चसामान्यताव
चः॥नस्वरूपाभिधायिस्याद्वैयर्थ्यंस्वपदस्ययत् ॥ चेतनस्यस्वभावोहिचैतन्यमितिगीयते ॥ तस्माद्विशेषबाहु
ल्यंचैतन्यस्यविशेषतः ॥ नज्ञेयज्ञातृहीनंहिज्ञानंनामक्वचिद्भवेत्॥ ज्ञेयज्ञानविहीनश्चज्ञइत्यत्रनचप्रमा॥ज्ञातृज्ञे
यविहीनंचज्ञानंचेद्भोक्तृभोग्यतः ॥ हीनंभोजनमेवस्यात्ताडनंकर्तृताड्यतः ॥ नित्यत्वात्तादृशंचस्यादितिचे
न्नित्यवागपि ॥ वाच्यवक्तृविहीनास्यान्नहिसाचैवतादृशी ॥ द्रष्टारोवेदवाचोहिसंतिवाच्यानिचांजसा॥नित्यो
द्रष्टाचवाच्यश्चभगवानेवचस्वयं॥नहिवक्तृविहीनाचवाच्यहीनापिवाक्क्वचित्॥ ज्ञातृज्ञेयविहीनंचज्ञानमेवन
तद्भवेत् ॥ नहिनित्योपिवक्तास्तिवाक्यवाच्यविवर्जितः ॥ ज्ञानज्ञेयविहीनश्चज्ञोप्येवंनैवविद्यते ॥ किंचसर्ववि
लोपश्चकेनमानेनगम्यते॥ सर्वेणसहतद्वाक्यमर्थश्चयदिगृह्यते ॥ तदभावेनसर्वस्यनापलापोभवेत्तदा ॥ नगृ
ह्यतेचेत्तन्न्यायादपलापोनहिक्वचित् ॥ उपपत्तिविहीनस्यवाक्यस्यार्थोनगम्यते ॥ उपक्रमादिलिंगानांबली
योह्युत्तरोत्तरं ॥ श्रुत्यादौपूर्वपूर्वंचब्रह्मतर्कविनिर्णयात्॥ प्रत्यक्षमुपपत्तिश्चबहवश्चागमायदा ॥ विरुध्यंतेनचा
र्थोस्तियत्रलिंगविरोधिता॥सएवार्थःकथंग्राह्यउपपन्नेऽविरोधिनि॥मुख्यार्थेविद्यमानेतुक्वसार्वज्ञ्यंनिषिध्यते॥

अनु अतःसर्वगुणैर्युक्तंब्रह्मांगीकार्यमेवहि ॥ अपलापोपिसर्वस्यनकथंचनयुज्यते ॥अनादियोग्यताचोक्तातेनग्रा व्याख्या·
ह्यैवसर्वथा ॥ मुक्तानांतारतम्यंचमानैरुक्तैर्नचाल्यते ॥ ज्ञानिनोपियतोनित्यंकुर्वंतिशुभमेवहि॥तारतम्यंतुमु
॥ ६१ ॥ क्तौचतेनैवाध्यवसीयते॥तारतम्यंनचेन्मुक्तौकुतःकुर्युःशुभंपुनः ॥ कृच्छ्रेणापितपोज्ञानंकर्माप्येतेचरंतिहि ॥ ३ । ४
बिभ्यतिस्माशुभान्नित्यंसकामाश्चशुभेसदा॥नचस्वभावएवायंभयपूर्वप्रवृत्तितः ॥ कृच्छ्रेणाचरणाच्चैवशुभस्यै
वपुनःपुनः॥तादृशोपिस्वभावश्चेदज्ञस्यापिभवेत्तथा॥फलवत्त्वेप्रमाणंचेत्तत्रज्ञस्यसमंहितत्॥निष्कामंज्ञानपूर्वं
चनिवृत्तमिहचोच्यते ॥ निवृत्तंसेवमानस्तुब्रह्माभ्येतिसनातनं ॥ शुभेनानंदवृद्धिःस्याद्ध्रासश्चैवाशुभेनहि ॥
ज्ञानिनोपियतस्तेनकर्तव्यंशुभमेवतैः ॥ उपास्तेसयआत्मानंक्षीयतेनास्यकर्महि ॥ अस्माद्ध्येवात्मनोयद्यत्का
मयेत्सृजतेचतत् ॥ अविद्वान्बहुकर्मापिह्यंतवत्फलमाप्नुयात् ॥ यदेवविद्ययाकुर्यात्तदेवह्यतिवीर्यवत् ॥ इत्या
दिवाक्यसामर्थ्यात्तारतम्यंविमुक्तिगं ॥ नचात्रोपासकस्यैवफलमक्षयमुच्यते ॥ नहिज्ञानंविनाक्वापिफलस्या ॥ २२१ ॥
क्षयताभवेत् ॥ ज्ञानद्वारेणचेत्तस्यनास्मत्पक्षप्रतीपता ॥ ज्ञानोत्तरस्यैवमपिह्यक्षयत्वंनचान्यथा ॥ पूर्वभाविशु
भानांहिज्ञानेनैवकृतार्थता॥प्रारब्धानांतुभोगेनतज्ज्ञानोत्तरकर्मणां॥ मुक्तावनुप्रवेशःस्यादन्यथातत्कृतिर्नहि

॥ज्ञानात्पूर्वाणिकर्माणिशुभानिज्ञानसिद्धये॥अकाम्यानिनिषिद्धानिज्ञानरोधायमुक्तये॥योग्यतायाबलाद्य
च्चशुभबाहुल्यमादितः॥ज्ञानबाहुल्यमेवैतत्कुर्यान्नान्यस्यकारणं॥ज्ञानस्यभक्तिभागत्वाद्भक्तिर्ज्ञानमितीर्यते॥
ज्ञानस्यैवविशेषोयद्भक्तिरित्यभिधीयते।परोक्षत्वापरोक्षत्वेविशेषौज्ञानगौयथा॥स्नेहयोगोपितद्वत्स्याद्विशेषो
ज्ञानगोपरः॥ इत्यभिप्रायतःप्रायोज्ञानमेवविमुक्तये॥वदंतिश्रुतयःसोयंविशेषोपिह्युदीर्यते ॥ भक्तिर्ज्ञानमि
तिक्वापिनहिद्वेषयुतादृशिः॥ पुरुषार्थायभवतिसर्वश्रुतिविरोधतः॥ चेतनस्यद्वयंभोग्यंसंसारोमुक्तिरेवच॥
संसारस्त्रिविधस्तत्रस्वर्गोमध्यमधस्तथा॥मुक्तिश्चद्विविधातत्रसुखंनित्यंतथापरं॥ नित्यदुःखमितिज्ञेयंसाधनं
संसृतावपि॥काम्यंकर्मनिषिद्धंचसाज्ञानमितिनिश्चयः॥ द्वेषोभक्तिश्चमुक्तौतुमुक्तिद्वयविधायकं॥ इतिपैंगि
श्रुतेर्द्वेषोनैवसन्मुक्तिकारणं॥ असन्मुक्तेःकारणंचमुक्तावित्यत्रकेशवः।मुक्तिशब्दोदितोमोक्षंस्वभक्तानांकरो
तियत्॥ द्वेषतोपिविमुक्तिश्चेन्महातात्पर्यरोधनं॥ भक्त्याप्रसन्नतोदेवान्मुक्तिरित्येवतद्गुणान्॥ वदंतिश्रुतय
स्सर्वाःपुराणान्यागमाअपि॥यदिद्वेषेणमुक्तिःस्याद्भक्तव्योदोषसंचयः॥ स्मर्तव्योभगवान्नित्यमित्यर्थेनैवहिक्व
चित्॥ द्वेषादिवगुणानाहपुराणेक्रुद्धवाक्यवत्॥यथाक्रुद्धःपितापुत्रंमरेत्याक्षेपपूर्वकं॥ प्रोक्तस्यान्यस्यकृत्यर्थं

अनु वदत्येवंपुराणगं॥वाक्यंश्रुतिविरोधेनस्वविरोधेनचांजसा॥ब्रह्मागमविरोधाच्चनद्वेषान्मुक्तिवाचकं॥ तमोद्वेषे व्याख्या.
॥ ६२ ॥ णसंयांतिभक्त्यामुक्तिंतथैवच।विष्णौविष्णुप्रसादेनविलोमत्वेनचांजसा। इतिषाड्गुण्यवचनमप्युक्तार्थनियाम ३ । ४
कं॥महातात्पर्यरोधेनकथंवाक्यंप्रमाणतां। यातिसर्वार्थरूपंहिमहातात्पर्यमिष्यते।वाचकत्वंहितात्पर्यंयदर्था
अखिलारवाः।सोर्थःकथंपरित्याज्यएकशब्दस्यसंशये।अतोविज्ञानभक्तिभ्यांपुरुषार्थःपरोभवेत्। यस्यदेवेपरा
भक्तिर्यथादेवेतथागुरौ।तस्यैतेकथिताह्यर्थाःप्रकाशंतेमहात्मनः।भक्त्याज्ञानंततोभक्तिस्ततोदृष्टिस्ततश्चसा।
ततोमुक्तिस्ततोभक्तिःसैवस्यात्सुखरूपिणी।भक्त्याप्रसन्नोभगवान्दद्याज्ज्ञानमनाकुलं॥तयैवदर्शनंयातःप्रद
द्यान्मुक्तिमेतया॥नाहंवेदैर्नतपसानदानेननचेज्यया॥शक्यएवंविधोद्रष्टुंदृष्टवानसिमांयथा॥ भक्त्यात्वनन्य
याशक्यअहमेवंविधोर्जुन॥ज्ञातुंद्रष्टुंचतत्त्वेनप्रवेष्टुंचपरंतप।इत्यादिवाक्यतश्चैवसोयमुक्तार्थईयते। नचप्रसाद
माप्नोतिद्वेषाद्भक्त्यातमाप्नुयात्।इतिदृष्टानुसारित्वमप्यस्मिन्नर्थईयते॥येपृथग्विहिताविष्णोर्गुणावेदेनसादरं
॥तएवदृष्टवैलोम्यादंगीकार्यानचापरं॥अन्यदृष्टानुसारेणवासुदेवेपिगृह्यते॥दोषाभावाश्चयेवेदैरुदिताअवि ॥२२२॥
हायतान्॥अनुक्ताअपिचग्राह्यामहातात्पर्यशक्तितः॥एवंबृहत्संहितावाक्सिद्धांतोहितदीरितः॥ तारतम्ये

नतद्भक्तेष्वपिभक्तिर्विनिश्चयात्॥कर्तव्यैषापितद्भक्तिर्लोकवेदानुसारतः॥ योहिभक्तःप्रधानेस्यात्तदीयेष्वपि
भक्तिमान्॥ दृश्यतेसौनियमतोविपरीतोविपर्यये॥ व्यभिचारोयदिक्वापिभक्तिह्रासोत्रकल्प्यते॥भक्तिदोषो
ह्यसौयन्नतद्भक्तेष्वपिभक्तिमान्॥तारतम्येनतेष्वद्धाभक्तिर्दृष्टानुसारतः।विष्णुप्रसादानुसारात्कार्यादोषस्तद
न्यथा॥ स्वप्रीत्यनुसृतौप्रीतिर्लोकेप्यद्धैवदृश्यते॥ तारतम्यपरिज्ञानमप्येतेनैवसाधनं॥लक्ष्मीविरिंचवाणीश
गिरिजेंद्रागिरांपतिः॥सूर्यादयश्चक्रमशोभगवत्प्रीतिगोचराः॥ तेषुभक्तिःक्रमेणैवकार्यानित्यंमुमुक्षुभिः॥ स
र्वेपिगुरवश्चैतेपुरुषस्यसदैवहि॥तस्मात्पूज्याश्चनम्याश्चध्येयाश्चपरितोहरिं॥इतिषाड्गुण्यवचनादप्येषोर्थोवसी
यते॥हरिभक्तिःक्रमेणैवतदीयेषुहरिस्मृतिः॥ हरिस्तुतिस्तत्स्मृतिश्चतत्स्तुतिर्हरिपूजनं॥ तत्पूजाविहितात्या
गइतिमुक्तेःक्रमेणहि॥ नियमात्साधनान्येवनित्यसाध्यानिचाखिलैः॥ इतिप्रवृत्तवचनंसाधनस्यविनिर्णये॥
प्रवृत्तेपंचरात्रेहिसाधनस्यातिनिर्णयः॥ हरिद्वेषोनशुभदःसद्वेषत्वाद्यथागुरोः॥ क्रमाद्भक्तिर्हरिप्रीतिकारणं
तत्प्रियोपगा॥भक्तिर्यतोयथास्वस्मिन्नित्याद्यायुक्तिरत्रच॥प्राधान्यतारतम्यानुसारिणीभक्तिरुत्तमा॥ प्रीति
दैवहरेर्यस्माद्भक्तिःसास्वोपगायथा॥ इतिवा॥५॥६॥ ॥ॐस्वामिनःफलश्रुतेरित्यात्रेयःॐ॥ ॥ज्ञानकर्मा

दिफलंचैषुक्रमोपगं ॥ स्वातंत्र्यतारतम्येनफलंहिफलिनांभवेत्॥ अशुभंत्वशुभेप्येषास्वातंत्र्यात्प्रीतितोहरेः॥
आज्ञयाचान्यगंनैवभोगायभवतिक्वचित् ॥ पुण्यमेवासुमाप्नोतिनदेवान्पापमाप्नुयात् ॥इत्यादिश्रुतयोमानमु
क्तेर्थेयुक्तयोपराः॥ उपासनाधर्मफलंयतोदेहांतरेस्थितिः॥ वासुदेवाज्ञयाचैवपूर्वकर्मानुसारतः॥ प्रेरयंतिहिते
जीवान्पुण्यपापेषुनित्यशः॥अरागद्वेषतश्चैवकथंदोषानवाप्नुयुः॥ हर्याज्ञाकरणादेवपुण्यमेभिरवाप्यते ॥ हरि
पूजेतिचोद्देशात्कथंनशुभमाप्नुयुः ॥ अतोयथाक्रमंधर्मज्ञानयोःफलमंजसा ॥ सर्वप्राणिगतंदेवाःप्राप्नुवंत्यावि
रिंचतः ॥ देवाएवहिदेवानांविशिष्टाविनियामकाः ॥ ब्रह्मात्वखिलदेवानांनराणांचनियामकः ॥ अतःसर्वगु
णानेषप्राप्नोत्यधिकमन्यतः॥ द्रव्यस्वातंत्र्यविज्ञानप्रयत्नैरधिकंफलं॥ देवानामन्यगंचापितेषुहिब्रह्मणोधिकं॥
बृहत्तंत्रोदितंवाक्यंहरिणाफलनिर्णये ॥ लोकेप्येतादृशगुणैःफलाधिक्यंहिदृश्यते ॥ एवंचकलिपूर्वाणामसुरा
णांमहत्फलं ॥ अशुभेषुसदैवस्यान्मिथ्याज्ञानादिकेषुहि॥ शुभाशुभफलंदेवाअसुराश्चसमाप्नुयुः॥ क्रमेणैवय
थाशक्तियथायेयेप्रयोजकाः॥ प्रेरकाअपिपापानांनदेवाःपापमाप्नुयुः॥ इतिप्रकाशिकायांहिप्रोवाचहरिरंजसा ॥२२३॥
॥ ॥ ॐआर्त्विज्यमित्यौडुलोमिस्तस्मैहिपरिक्रियतेॐ ॥ ॥ ॐसहकार्यंतरविधिःपक्षेणतृतीयंतद्वतोवि
ध्यादिवत्ॐ॥ ॥ यद्यप्येवंसुराणांचदैत्यानांचमहत्फलं॥ शुभाशुभेभ्यएवंचकर्तुश्चस्याद्यथोदितं॥ तस्मान्नि
रयमानुष्यस्वर्गमुक्त्युपभोगिनः॥मानुषोत्तममारभ्यदेवास्तुनिरयंविना ॥असुरास्तुविनामुक्तिंतमोंधमपिचा
प्नुयुः ॥ इतितत्त्वविवेकोक्तंस्वयंभगवतोवचः ॥ ७॥ ॥ ॐअनाविष्कुर्वन्नन्वयात्ॐ ॥ ॥ ज्ञानदाअपिचाचा
र्यविशेषात्फलमाप्नुयुः॥मुक्तावष्टगुणंशिष्याद्गुरुराप्नोतिशोभनं॥तद्गुरुर्द्विगुणंतस्मात्सार्धंतावत्ततोपरे॥देवाः
सहस्रगुणितंक्रमात्तस्माद्यथोत्तरं॥ब्रह्मामहौघगुणितमेवंफलविनिर्णयः॥ इत्याहभगवांश्छास्त्रेगुरुवृत्ताभिधेस्व
यं॥युक्तंचतन्नगोदातागोमात्रफलमाप्नुयात्॥यइमंपरमंगुह्यंमद्भक्तेष्वभिधास्यति ॥ भक्तिंमयिपरांकृत्वामामे
वैष्यत्यसंशयः॥नचतस्मान्मनुष्येषुकश्चिन्मेप्रियकृत्तमः॥भवितानचमेतस्मादन्यःप्रियतमोभुवि ॥ इत्याहभ
गवानेवमपिपात्रमपेक्ष्यते ॥ ९॥ ॥ ॐऐहिकमप्रस्तुतप्रतिबंधेतद्दर्शनात्ॐ ॥ ॥१०॥ ॥ ॐएवंमुक्तिफला
नियमस्तदवस्थावधृतेस्तदवस्थावधृतेःॐ॥ ॥ ११॥ एवमेवाविरोधेनप्रारब्धस्यैवकर्मणः ॥ ज्ञानंदृष्टफलंप्रो
क्तंमुक्तिश्चैवेहलभ्यते ॥ १०॥ ११ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्या
नेतृतीयाध्यायस्यचतुर्थःपादः॥ ३ ॥ ४ ॥ आध्यायश्चसंपूर्णः॥ श्रीरस्तु ॥ ॥ ॥

श्रीगुरुभ्योनमः ॥ ॐ ॥ समन्वयाविरोधाभ्यांसिद्धेवस्तुनिसाधने ॥ विचारितेष्वशेषेषुसाधनेषुविशेषतः ॥
नित्यशःकार्यमत्यंतमवश्यंभाविसाधनं ॥ चिंत्यतेप्रथमंतत्र ॥ ॥ ॐआवृत्तिरसकृदुपदेशात्ॐ ॥ ॥ श्रव
णादिसकृत्क्रिया ॥ आवृत्तिर्वेतिसंदेहेकर्तव्यावृत्तिरेवहि ॥ उपदेशोतत्त्वमसीत्यादिर्ह्यसकृदेवयत् ॥ लिंगा
ल्लातव्यतःपूर्वमृजोर्ब्रह्मत्वतःशतात् ॥ शुश्रावोग्रतपानामयोग्योरुद्रपदस्ययः ॥ सार्धपरार्धविष्णोस्तुगुणा
न्भक्त्यासदोद्यतः ॥ तत्रिभागमुपासांचचक्रेसंभृतमानसः ॥ दशमन्वंतरंशक्रपदयोग्योगरुत्मतः ॥ पदयो
ग्यात्सुमनसःसुनंदोनामचाशृणोत् ॥ उपासांचक्रउद्युक्तोमन्वंतरचतुष्टयं ॥ सूर्याचंद्रमसोश्चैवपदयोग्यौ
सुतेजसौ ॥ सुरूपश्शांतरूपश्चमन्वंतरचतुष्टयं ॥ अशृण्वतांसुमनसोमन्वंतरमुपासतां ॥ ततःप्रोक्तास्तुतेस
र्वेभक्त्योग्रतपआदयः ॥ अपश्यन्परमंविष्णुंतत्प्रसादैधिताःसदा ॥ इत्युक्तंविष्णुनासाक्षाद्ग्रंथेसत्तत्त्वसंज्ञिते
॥१॥ ॥ ॐआत्मेतितूपगच्छंतिग्राहयंतिचॐ॥ ॥आत्मेतिनामकथितंसाक्षान्नारायणस्यहि ॥ आत्माब्रह्म
महांस्तारःपरमेशःशुचिश्रवाः ॥ विष्णुर्नारायणोनंतइतिश्रीपतिरीर्यते ॥ इतिपैंगिश्रुतिश्चैवतथैवपरमश्रु
तिः ॥ ओमात्माभगवान्विष्णुरात्मानंदोक्षरःस्वराट् ॥ विश्वत्रातानृसिंहोजोनारायणउरुक्रमः॥ अनसूयात

थैवात्रेर्जज्ञेपुत्रानकल्मषान् ॥ दत्तंदूर्वाससंसोममात्मेशब्रह्मसंभवान् ॥ इतिभागवतेचैवतस्मादात्माजनार्द
नः॥तस्मादुपास्योविष्णुरितिज्ञातव्यःसज्जनैःसदा॥ तथैवोपासतेसंतस्तथैवोपदिशंतिच॥आदानार्थत्वतश्चा
यमात्मशब्दःपतिंवदेत्॥स्वामीमेविष्णुरित्येवनित्यदोपास्यमंजसा॥ स्वामीविष्णुरितिध्यानंविशेषणविशे
ष्यतः॥ कर्तव्यंसर्वथैवैतन्नकथंचनविस्मरेत् ॥ इतिसत्तत्ववचनंषाड्गुण्यवचनंपरं॥ममस्वामीहरिर्नित्यंसर्व
स्यपतिरेवच॥ इतिध्येयःसर्वदैवभगवान्विष्णुरव्ययः ॥२॥ ॥ॐनप्रतीकेनस्ःॐ॥ ॥ प्रतीकविषयत्वेनन नहिसः
कार्याविष्णुभावना॥प्रतीकंनैवविष्णुर्यन्मिथ्योपासाह्यनर्थदा ॥योन्यथासंतमात्मेशमन्यथाप्रतिपद्यते ॥
किंतेननकृतंपापंचोरेणात्मापहारिणा॥योन्यथासंतमात्मानमन्यथाप्रतिपद्यते ॥ किंतेननकृतंपापंचोरेणे
शापहारिणा॥योन्यथैवस्थितंविष्णुमन्यथाप्रतिपद्यते॥ किंतेननकृतंपापंचोरेणब्रह्महारिणा॥स्वात्मानंप्र
तिमांवापिदेवतांतरमेववा॥चेतनाचेतनंवान्यद्ध्यायेद्यःकेशवस्त्विति ॥ किंतेननकृतंपापंचोरेणेशापहारि
णा॥ योन्यद्विष्णुरितिध्यायेज्ज्ञानीयाद्वाहरिंतथा॥ अंधेतमसिमज्जेत्सयत्रनैवोत्थितिःक्वचित् ॥योन्यद्वि
ष्णुरितिध्यायेद्विष्णुरन्यदितिस्मवा॥अन्यथाध्यानदोषेणसोंधेतमसिमज्जति ॥योन्यद्विष्णुरितिध्यायेद्वि

ष्णुरन्यदितिस्सवा॥महातमसिमग्नस्यतस्यनैवोत्थितिःक्वचित् ॥ यत्किंचिदन्यथासंस्थमन्यथाध्यातमंजसा॥
ध्यातुर्महादोषकरंकिमुसर्वेश्वरोहरिः ॥ यत्किंचिदन्यथासंस्थमन्यथाध्यातमंजसा॥महादोषकरंविष्णुःकिमु
सर्वेश्वरेश्वरः ॥ यत्किंचिदन्यथासंस्थमन्यथाज्ञातमंजसा ॥ अनर्थकारणंलोकेकिमुसर्वेश्वरेश्वरः ॥ नकिंचिद
न्यथाज्ञेयंध्येयंवातेनकुत्रचित् ॥ किमुसर्वोत्तमोविष्णुर्ज्ञेयोनीचतयाक्वचित् ॥ तस्माद्वस्तुयथारूपंज्ञेयंध्येयंच
सर्वदा ॥ कारणंपुरुषार्थस्यनान्यथाभवतिक्वचित् ॥ इतिश्रुतिपुराणोक्तिबलतोनप्रतीकता ॥ ध्येयाविष्णोः
क्वचिद्यस्मान्मिथ्याज्ञानमनर्थदं ॥ इत्यभिप्रेत्यनहिसइत्याहभगवान्प्रभुः ॥ प्रतीकसंस्थितत्वेनध्येयोविष्णुर्न
चान्यथा ॥ ३ ॥ ॥ ॐब्रह्मदृष्टिरुत्कर्षात्ॐ ॥ ॥ ब्रह्मेतिचसदाध्येयोभगवान्विष्णुरंजसा ॥ उत्कृष्टोब्रह्मश
ब्दार्थःपूर्णत्वंब्रह्मतायतः ॥ आधिव्याधिनिमित्तेनविक्षिप्तमनसोपितु ॥ ध्येयैवब्रह्मतानित्यंविष्णोर्भक्त्यानि
रंतरं ॥ इतिप्रकाशिकायांचवचनंविष्णुनेरितं ॥ नात्मेतिसूत्रमीशस्यजीवत्वप्रतिपादकं ॥ आत्मशब्दंयतो
हेतुंकृत्वाजीवंन्यवारयत् ॥ स्वशब्दात्प्राणभृच्चैवनोक्तइत्येववेदराट् ॥ यद्यात्मशब्दोजीवेपिकथंसविनिवारये
त् ॥ आत्मशब्दोदितस्तस्माद्विष्णुरेवनचापरः ॥ आत्मब्रह्मादयःशब्दास्तस्मृतेविष्णुमव्ययं ॥ नवदंतियतो
नाप्ताक्वापितैर्गुणपूर्णता ॥ नारायणाध्यात्मगतमितियद्वैष्णवंवचः ॥ यदिजीवेशयोर्वेदपतिरैक्यंचमन्यते ॥
आत्मशब्दंकथंतस्मान्निवारयतियुक्तितः ॥ भेदस्यव्यपदेशंचस्थितिंचादनमेवच ॥ भेददार्ढ्येहेतुमाहसतात्प
र्यंजगत्पतिः ॥ व्यावहारिकभेदश्चेत्क्वासावव्यावहारिकः ॥ व्यावहारिकमित्येववचनंव्यावहारिकं ॥ उतने
तिविकल्पेतुयदिस्याद्व्यावहारिकं ॥ तस्यापिबाध्यताचेत्स्याद्भेदःस्यात्पारमार्थिकः ॥ अव्यावहारिकत्वंचेद्भेदो
यस्सत्यतांगतः ॥ एकस्यासत्यतायांहिद्वयोरेवविरुद्धयोः ॥ अन्यस्यसत्यतैवस्यादितिकेननिवार्यते ॥ असत्यं
नोक्तमित्युक्तेसत्यमुक्तमितिप्रजाः ॥ जानंत्युक्तंतुनोसत्यमित्युक्तेऽसत्यतामपि ॥ नस्वप्नेपिद्वयंमिथ्यातत्रैकं
सत्यमेवहि ॥ भावाभावावुभौतत्रकथंमिथ्याभविष्यतः ॥ भावस्यहिनिषेधेतुनाभावस्यनिषेधनं ॥ स्ववाचोस
त्यताचेत्स्यात्तस्माद्भेदस्यसत्यता ॥ तस्माज्जीवेशयोर्भेदउक्तन्यायेनगम्यते ॥२॥ एतस्मादात्मशब्दोयंपरमा
त्माभिधाभवेत् ॥ प्रतीकविषयत्वेनविष्णुदृष्टिर्नतद्भवेत् ॥ प्रतीकेविष्णुरित्येवतस्मात्कार्याह्युपासना ॥ नच
विष्णुःप्रतीकंयत्तस्मा ॥ ३ ॥ न्नात्मेत्युपासना ॥ इतिपक्षोयदाब्रह्मदृष्टिश्चात्रविरुध्यते ॥ सनेतियुक्तिस्तत्रा
पिसमेत्युक्तविरुद्धता ॥ यद्यप्युत्कर्षमात्रेणह्यतद्भावेप्युपासना ॥ उत्कर्षआत्मनोपिस्याच्चेतनत्वादचेतनात् ॥

अनु
॥ ६६ ॥

तस्मादतत्वंनोपास्यमितिवेदविदांमतं ॥ उत्कर्षाद्ब्रह्मताध्यानेयदिस्यात्फलमंजसा ॥ ब्रह्मणोनीचताज्ञानाद नर्थःकिंनजायते ॥ अचेतनस्यब्रह्मत्वध्यानेतुष्टिर्नहिक्वचित् ॥ नीचस्यस्वात्मताज्ञानात्कुप्यतिब्रह्मलोकवत् ॥ चंडालोनृपइत्युक्तेनृपश्चंडालइत्यपि ॥ कोविशेषःपरिज्ञातेनृपेणस्यात्कथंचन॥पुरतोनरदेवस्यचंडालोयदि पूज्यते ॥ राजवत्किंनकोपस्स्याद्राज्ञोलोकेभिपश्यति॥राज्ञस्तुपुरतःप्रोक्तेचंडालोनृपइत्यपि॥आत्मानंसइति प्रोक्तमितिवद्ध्येवकुप्यति ॥ अभेदेनैतयोर्ध्यानेकोविशेषोवचस्यपि॥ अयंराजात्वमित्युक्तेचंडालेथनृपेपिच॥ चंडालइतितुप्रोक्तेसममेवहिदूषणं ॥ ध्यातेप्येकस्यतद्भावेतद्भावोन्यस्यकिंनतत् ॥ नचैवतदविज्ञातंसर्वज्ञब्रह्म णाक्वचित् ॥ तस्मादपेशलंसर्वमन्यस्यब्रह्मतावचः ॥ तस्माद्यथोक्तमार्गेणब्रह्मोपास्यंमुमुक्षुभिः ॥४॥ ॥ ॐत दधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात्ॐ॥ ॥ तथोपास्यांजसादृष्टंब्रह्मपापंचभस्मसात् ॥ करोति निखिलंपूर्वंपाश्चात्यस्याप्यसंगतां ॥ करोति ॥ ॥ ॐइतरस्याप्येवमसंश्लेषःपातेतुॐ ॥ ॥ तद्विषश्चैवंपुण्यना शोप्यसंगता ॥ यदेवविद्ययेत्यत्रपूर्वोक्ताद्धिविशिष्यते ॥ पूर्वंस्वर्गादिलब्ध्यर्थंवीर्यवत्त्वेनचोदितं ॥ कर्मविद्या युतंपश्चान्मोक्षेवीर्यप्रदंत्विति ॥ ॥ ॐभोगेनत्वितरेक्षपयित्वाथसंपत्स्यतेॐ॥॥ ततोभोगेनपुण्यंचक्षपयित्वे

व्याख्या.
४ । १

॥ २२६ ॥

तरत्तथा॥ब्रह्मद्विद्ब्रह्मदर्शीचतमोमोक्षाववाप्नुतः॥ब्रह्मणांशतकालात्तुपूर्वमारब्धसंक्षयः॥ब्रह्मणस्त्वेवतावत्त्वं
पंचाशद्ब्रह्मणस्तथा ॥रुद्रस्यविंशदेवस्यादिंद्रस्यार्कादिकेदश॥अन्येषांब्रह्ममात्रस्यत्वंतआरब्धसंक्षयः॥ब्रह्मणै
वसहातश्चपरंनारायणंव्रजेत् ॥ इतिसंतत्त्ववचनंस्वयंभगवतोदितं ॥८॥ इतिश्रीमदानंदतीर्थभगवत्पादाचा
र्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेचतुर्थाध्यायस्यप्रथमःपादः ॥ ४ ॥ १ ॥ ॥
ॐ ॥ देवानांचमनुष्याणामेतावत्सममेवहि ॥ उत्क्रांतिमार्गौदेवानांनप्रायेणभविष्यतः॥कर्मक्षयस्तथोत्क्रांति
र्मार्गोभोगश्चतुष्टयं॥फलंमोक्षइतिप्रोक्तंक्रमात्पादेषुचोदितं॥स्रष्टृष्वेवचसृज्यानांप्रवेशोब्रह्मणोलये ॥ देवानां
मार्गउद्दिष्टोनार्चिरादिर्नचोत्क्रमः ॥ स्रष्टुस्तुग्रासभूतस्यदेहस्तत्रलयंव्रजेत् ॥ यतःसृज्यस्यदेवस्यनैवोत्क्रांति
स्ततोभवेत् ॥ लयाच्चैवार्चिरादीनांलोकानामपिसर्वशः॥कथंमार्गोभवेत्तेषांविशतामुत्तरंस्वतः ॥ जातानांमा
नुषेलोकेदेवानांतुकदाचन ॥ उत्क्रांतिमार्गौभवतोनतदामुक्तिरिष्यते ॥ अन्येषामपिसाक्षात्तुमुक्तिःप्राप्यापि
तंहरिं॥ सहैवब्रह्मणाभूयादितिशास्त्रस्यनिर्णयः ॥क्ष्मांभोनलानिलवियन्मनइंद्रियार्थभूतादिभिःपरिवृतःप्रति
संजिघृक्षुः॥अव्याकृतंविशतियर्हिगुणत्रयात्माकालंपरंस्वमनुभूयपरःस्वयंभूः॥ एवंपरेत्यभगवंतमनुप्रविष्टाये

अनु ॥ ६७ ॥

योगिनोजितमरुन्मनसोविरागाः॥ तेनैवसाकममृतंपुरुषंपुराणंब्रह्मप्रधानमुपयांत्यगताभिमानाः॥भगवंत
मनुप्राप्ताअपितुब्रह्मणासह॥परमंमोक्षमायांतिलिंगभंगेनयोगिनः॥प्राप्ताअपिपरंदेवंसहैवब्रह्मणापुनः॥आ
नंदव्यक्तिमायांतिपूर्णांलिंगस्यभंगतः॥ इतिश्रुतिपुराणोक्तिबलाद्विज्ञायतेचतत्॥ भोगंस्तुसर्वदेवानांनरा
दीनांचविद्यते॥ तत्रप्रवेशोदेवानामुत्तरोत्तरतःक्रमात्॥उच्यतेदेहगानांचवृत्तीनामेवमेवतु॥ तत्रमोक्षस्वरू
पंतुवादिनःप्रतिभाश्रयात्॥नानावदंतिपुंसांहिमतयोगुणभेदतः॥पृथक्पृथक्प्रजायंतेतमसैवान्यथामतिः॥
रजसामिश्रबुद्धित्वंसत्त्वेनैवयथामतिः॥ गुणातीताविमुक्तानांमतिःशुद्धचितिर्यतः॥ सम्यगेवाथनित्याचत
त्तन्माहात्म्ययोगतः॥ बहुलाचातिविशदास्पष्टाचैवश्रियोमतिः ॥ महाशुद्धचितित्वेनततोप्यतिमहाचि
तिः॥ अशेषोरुविशेषाणामतिस्पष्टतयादृशिः॥ नित्यमेकप्रकाराचनारायणमतिःपरा॥ सूर्यप्रभावदखिलं
भासयंतीनिरंतरा॥ निर्लेपावीतदोषाचनित्यमेवाविकारिणी॥विशेषांस्तद्गतांस्त्यक्त्वाप्रायस्तल्लक्षणाश्रियः॥
तथैवस्पष्टताभावात्तत्तंत्रत्वात्तुकेवलं॥नतादृशीब्रह्मणस्तुप्रायेणैवंश्रियोयथा॥मुक्तानांतुतदन्येषांसमुद्रतरलो
पमा॥अग्निज्वालावदेवस्यात्स्मृतिगानांदृशोभवः॥एवंविधेषुज्ञानेषुतमसामुष्टदृष्टयः॥ खद्योतसदृशात्यल्पज्ञा

व्याख्या ४।२ ॥ २२७॥

नत्वादन्यथादृशः॥वदंतिवादिनोमोक्षंनानामतसमाश्रयात्॥आश्रित्यप्रतिभामाहजिनस्तत्रातितामसीं॥
ज्ञानात्कर्मक्षयान्मोक्षोभवेद्देहाख्यपंजरात्॥पंजरोन्मुक्तखगवदलोकाकाशगोचरः॥नित्यमूर्ध्वंव्रजत्येवपुद्ग
लोहस्तपादवान्॥इतितत्केनमानेनमोक्षरूपंप्रदर्श्यते॥गतिरूर्ध्वाचदुःखेतागतित्वाल्लौकिकीयथा॥इत्यु
क्तेचानुमानैकशरणस्यकिमुत्तरं॥अनूर्ध्वगतितातत्रयद्युपाधिःखगस्यच॥दूरोर्ध्वगमनेदुःखमितिसाध्यानु
गोनसः॥प्रतिसाधनरूपस्यनानुमानस्यदूषणं॥उपाधिःप्रतिरूपंहिसाधनंतन्नचापरं॥अथापिसशरीरत्वं
चात्रोपाधिर्नवैभवेत्॥गतित्वंयत्रदेहित्वमितियत्साधनानुगं॥आगमाननुसारित्वेप्रसंगोयंयतस्ततः॥
नापसिद्धांततादोषःप्रसंगेयदिसाभवेत्॥तदैवातिप्रसंगःस्यान्नप्रसंगःक्वचिद्भवेत्॥लोकाकाशगतित्वंचेद्दुपा
धिःसाधनानुगः॥सोपीत्युक्तेवदेत्किंसतस्माद्वेदोदितोभवेत्॥मोक्षएवस्वयंविष्णुर्यद्यपीशोह्यशेषवित्॥चा
र्वाकसौगतमतंमोहायैवचकारयत्॥असुराणामयोग्यानांवेदमार्गेप्रवर्ततां॥अतोसुराधिकारत्वान्नग्राह्यंतन्म
तंक्वचित्॥चतुष्प्रकारंतच्चोक्तंशून्यंविज्ञानमेकलं॥अनुमेयबहिस्तत्त्वंतथाप्रत्यक्षबाह्यगं॥इतितत्रतुयेशून्यं
वदंत्यज्ञानमोहिताः॥तेमोक्षंतादृशंब्रूयुर्निश्शंकंमायिनोयथा॥नकिंचिन्मुक्त्यवस्थायामात्मात्मीयमथापि

वा ॥ एकस्मिन्संसृतेर्मुक्तेनकिंचिदवशिष्यते ॥ तत्संवृत्यैवभेदोयंचेतनाचेतनात्मकः॥ दृश्यतेसंसृतेर्ध्वंसोनि
र्विशेषैवशून्यता ॥ नसत्त्वंनैवचासत्त्वंशून्यतत्त्वस्यविद्यते ॥ नसुखत्वंनदुःखत्वंनविशेषोपिकश्चन ॥ निर्विशे
षंस्वयंभातंनिर्लेपमजरामरं ॥ शून्यंतत्त्वमसंबाधंनानासंवृतिवर्जितं ॥ अशेषदोषरहितंमनोवाचामगोचरं॥
मोक्षइत्युच्यतेसद्भिर्नानासंवृतिदूषितं ॥ संसृत्यवस्थाविज्ञेयासंवृत्यैवविशिष्यते॥ स्थितयाध्वस्तयाचैवसंसृति
र्मोक्षइत्यपि॥केचित्तेष्वन्यथाप्राहुस्संवृत्यैवत्वनेकधा ॥ अवच्छिन्नंमहाशून्यंनानापुद्गलशब्दितं॥यस्यशून्यैक
रसताज्ञानात्सात्वपगच्छति॥सपुद्गलत्वनिर्मुक्तोमहाशून्यत्वमेष्यति ॥ संवृत्त्यायस्त्ववच्छिन्नोदुःखान्यनुभवत्य
लं ॥ इत्येवंमायिनश्चाहुरेकजीवत्ववादिनः॥ बहुजीवमताश्चेतिमायातेषांतुसंवृतिः ॥ निर्विशेषत्ववाचैवशू
न्यंब्रह्मेतिनोभिदा॥सच्चित्सुखादिकंचैवकिंकुतोखंडवादिनः॥ व्यावर्त्यमात्रभेदस्तुविद्यतेशून्यवादिनः ॥ अ
नृतादेरपोहंतुस्वयमेवहिमन्यते॥ निर्विशेषत्वतोनैवविशेषोब्रह्मशून्ययोः ॥ प्रामाण्यादिचवेदस्यफलतःसम
मेवहि ॥ अतत्त्वावेदकंयस्मात्प्रमाणंतेनकथ्यते ॥ अतत्त्वावेदकत्वंयदप्रामाण्यंसतांमतं ॥ दीर्घभ्रांतिकरीचे ॥२२८॥
त्स्यादतत्त्वावेदकप्रमा ॥ रज्जुसर्पादिविज्ञानादप्याधिक्यादमानता ॥ स्यादागमस्यानिवर्त्यमहामोहप्रदत्व

तः ॥ तलनैल्यादिविज्ञानमाकाशेमानतांव्रजेत् ॥ छत्राकारत्वविज्ञानंचंद्रप्रादेशतामतिः ॥ निर्भेदत्वंतुशून्य
स्यतेनाप्यंगीकृतंसदा ॥ सत्त्वासत्त्वादिधर्माणामभावउभयोर्मतः ॥ नहिसत्प्रतियोगित्वंशून्यत्वंतेनचेष्य
ते ॥ नचदुःखविरोधित्वादन्याह्यानंदतेष्यते ॥ मायिनाशून्यपक्षेपिज्ञानंजाड्यविरोधिच ॥धर्माःकेपिनसंत्ये
वकोविशेषस्ततस्तयोः॥एतादृशानांपक्षाणांदूषणंप्रभुणाकृतं ॥ स्वपक्षसाधनेनैवनाभावइतिचोक्तितः॥ आ
त्माभावेपुमर्थःकइष्टस्यात्मावधिर्यतः॥यदिनात्मावधिर्मोक्षोमोक्षःस्याद्घटशून्यता॥कल्पितत्वाद्विशेषाणांमा
यिनोपिसमंहितत् ॥ दृश्यमानेविशेषेपियदिचेदविशेषता ॥ घटाभावेविशेषःस्यात्पाश्चात्यश्चेदनागतः ॥ न
मोक्षोविमतोयस्माददेहोघटशून्यता ॥ यथेत्युक्तेवदेत्किंसयोनुमामात्रमानकः ॥ नचमायीवदेदत्रपूर्वोक्तेनैव
वर्त्मना॥अमानत्वाच्छ्रुतेस्तस्यनचादेहत्ववादिनी॥श्रुतिःकाचिददेहत्वमप्राकृतशरीरता ॥ मोक्षेभोगंयतोब्रू
तेजक्षन्क्रीडन्नितिश्रुतिः॥निर्दुःखत्वान्नतन्मोक्षःप्रतिपन्नंयथेतिच ॥ अनुमादूषणंकिंस्याद्वादिनोःशून्यमायि
नोः॥दुःखंदुःखादभिन्नत्वान्मोक्षोपिस्यादसंशयं।भेदेसद्वैततैवस्यादित्याद्यमितदोषतः॥हेयंमायामतेनैवसह
शून्यमतंबुधैः॥एवंविज्ञानवादोपिज्ञानमात्रविशेषतः ॥ तस्यापिभंगुरत्वादिविशेषमपहायहि ॥ अद्वैततासतं

३९

साक्षादुक्तदोषस्ततोभवेत्।कालोनकेवलज्ञानीकालत्वात्प्रतिपन्नवत्। एतयानुमयारोधान्नताहृङ्मोक्षरूपता ।
यदिकालोपिनेत्याहकदेतिप्रश्नउत्तरं॥किंवक्ष्यतियदावस्थांवदेत्सापक्षतांव्रजेत्॥अवस्थात्वादितिह्येवहेतुःसा
पिकदेतिच॥पृष्टेकालश्चवक्तव्योनाकालत्वंततोभवेत् ॥ नकालइतिसामान्यनिषेधेकालगप्रमा ॥ निरुणद्धिस
मश्चायंत्रयाणामुक्तवादिनां॥एकजीवत्वपक्षेतुकालाभावादियंप्रमा॥कुपिताकालमाधायद्वैतमेवोपपादयेत्।
विमतःप्रपंचवान्कालःकालत्वात्प्रतिपन्नवत्॥ इतिचान्यानुमैकत्वंजीवस्यविनिवारयेत् ॥ कालशब्दैश्वरैकत्व
मतान्यप्येवमेवहि॥निराकृतानितेषांचसमत्वात्पक्षदोषयोः ॥ ज्ञानंस्वरसभंग्येवनित्यसंतानमिष्यते ॥बौद्धा
भ्यामपराभ्यांतुतत्राप्युक्तानुमारिपुः ॥ मोक्षोनशुद्धविज्ञानसंतानीकालगत्वतः ॥ प्रतिपन्नोयथेत्येतदनुमानं
तदुत्तरं ॥ अनुमानानिसर्वाणिप्रतिसाधनयोगतः ॥ निषिद्धान्युक्तभंग्यैवश्रुतयश्चास्मदुक्तिगाः ॥ सांख्यनै
यायिकाद्याश्चप्राहुर्मोक्षंचनिःसुखं ॥ इच्छाद्वेषप्रयत्नादेरपिसर्वात्मनालयं ॥ तत्राहुर्नैतदप्यत्रशोभनंश्रुतयो
यतः ॥ महानंदंचभोगंचनियमेनवदंतिहि ॥ प्राकृतप्रियहानिस्तुप्रियास्पृष्टिरितीर्यते ॥ अप्रियंप्रतिकूलंतद
विशेषेणशब्दितं ॥ नास्तिह्यप्राकृतंदुःखंसतोजीवस्यकुत्रचित् ॥ प्रियंस्वरूपमेवास्यबलानंदादिवाक्यतः॥ हे



यत्वादप्रियस्यैवप्रियहानेरनिष्टतः ॥ नसमस्तप्रियाभावोमोक्षेप्रोक्तेतुयुज्यते ॥ अप्रियस्यस्वरूपत्वमसुरेष्वेव
हिश्रुतं ॥ असुरानैवमेवंचनैवंचाखिलमानुषाः ॥ इत्यात्मप्रियहानायकोयतेतचबुद्धिमान् ॥ संज्ञानास्तीत्य
पिह्यस्यनामुक्तज्ञेयतेतिहि॥धर्मानुच्छित्तिमेवास्ययतोवक्त्युत्तरश्रुतिः ॥ आशंक्यास्यज्ञानहानिंमैत्रेय्यामोह
माहमां ॥ भवानित्युक्तवत्याहिनाहंमोहंवदामिते ॥ इत्युक्त्वायाज्ञवल्क्योहिस्वरूपानाशमूचिवान्॥ज्ञानरूप
स्यविज्ञाननाशस्तन्नाशएवयत्॥इतिशून्यमतोच्छित्त्यैपुनरानंदपूर्वकान्॥ धर्मानाहाप्यनुच्छिन्नांस्तार्किकैर्वि
निवारितान् ॥ मात्रासंसर्गमप्याहतथामाध्यंदिनश्रुतिः ॥ आचिक्षेपमतंतच्चयस्मिन्नविषयादनं ॥ घ्राणादि
भोगाभावस्यत्वनिष्टत्वहृदाश्रुतिः ॥ येनेदमखिलंवेदविज्ञातारंस्वमेवच ॥ केनतंचविजानीयादित्यनिष्टंचस
र्वथा ॥ नाखिलज्ञापकोविष्णुरज्ञेयोनियमेनहि ॥ तज्ज्ञानार्थंहिवेदानामखिलानांप्रवर्तनं ॥ प्रत्यक्षमात्मवि
ज्ञानाविरोधानुभवादपि ॥ नस्वविज्ञानितायांचविरोधःकश्चनेयते ॥ कर्तृकर्मविरोधश्चनित्यानुभवरोधतः ॥
कथमेवपदंगच्छेद्विरोधोदृष्टबाधनं॥सोश्नुतेसर्वकामांश्चकामान्नीकामरूप्यथ ॥ इत्यादिश्रुतयश्चोक्तमर्थमेवव
दंतिहि॥अस्वातंत्र्यादिवेत्युक्तंनद्वैताभावतःक्वचित्॥ आत्मैवाभूदितिह्यस्मादविशेषप्रसंगतः॥ अस्वातंत्र्यो

अनु पमाभेदभेदेष्विवउदीरितः ॥ शब्दतत्त्वइतिप्रोक्तंमैत्रेय्युक्तोत्तरंचकिं ॥ सुखादिधर्महानौतुमुक्तेःकिंचप्रयो व्याख्या.
॥७०॥ जनं ॥ यद्यर्थोदुःखहानिःस्यादनर्थःसुखनाशनं ॥ तयोश्चदुःखहानाद्धिसुखनाशोधिकोभवेत् ॥ प्राप्यापिदुः ४।२
खंसुमहत्सुखलेशाप्तयेजनः ॥ यततेसुखहानौहिकोमोक्षाययतेत्पुमान् ॥ अल्पाच्चसुखनाशाद्धिबिभेत्यतितरां
जनः ॥ महच्चदुःखमाप्नोतिसुखनाशनिवृत्तये ॥ नचरागनिमित्तंतद्वीतरागाअपिस्फुटं ॥ नारदाद्याःसुखा
र्थायसहंतेदुःखमंजसा ॥ युद्धादिदर्शनंयस्मात्सुदुःखेनापिकुर्वते ॥ यदेंद्रवैरोचनयोर्ब्रह्मास्त्राभ्यांसुतापिताः ॥
अपिनैवाजहुर्युद्धरसात्तेनारदादयः ॥ इतिस्कांदवचस्तस्मात्सुखाभावायकोयतेत् ॥ विमतोदुःखयुग्यस्माच्चे
तनःसंत्सुखोज्झितः ॥ प्रतिपन्नोयथेत्येवचानुमाकेनवार्यते ॥ सर्वश्रुतिपुराणेषुसुखभावोक्तितस्तथा ॥ मुक्तौ
नग्राह्यमेवैतत्सुखाभावमतंबुधैः ॥ सोनानंदाद्धिमुक्तस्सन्नानंदीभवतिस्फुटं ॥ निर्गुणेब्रह्मणिमयिधारयन्विश
दंमनः ॥ परमानंदमाप्नोतियत्रकामोवसीयते ॥ नविष्णुसदृशंदैवंनमोक्षसदृशंसुखं ॥ नवेदसदृशंवाक्यंनव
र्णोंकारसम्मितः ॥ यत्रानंदाश्चमोदाश्चमुदःप्रमुदआसते ॥ कामस्ययत्राप्ताःकामास्तत्रमाममृतंकृधि ॥ इति ॥२३०॥
श्रुतिपुराणानितत्रतत्रवदंतिहि ॥ अतोमोक्षेसुखाभावइतियत्किंचिदेवहि ॥ शिरःकराद्यभावश्चनमुक्तस्यभ

वेत्कचित् ॥ श्रुतयश्च पुराणानि मानमत्र बहूनि च ॥ नवर्तते यत्र रजस्तमस्तयोः सत्त्वं च मिश्रं न च कालविक्रमः ॥
नयत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ॥ श्यामावदाताः शतपत्रलोचनाः पिशंगवस्त्राः सुरुचः सु
पेशसः ॥ सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेकनिष्काभरणाः सुवर्चसः ॥ प्रवालवैदूर्यमृणालवर्चसां परिस्फुरत्कुंडलमौ
लिमालिनां ॥ भ्राजिष्णुभिर्यः परितो विराजते लसद्विमानावलिभिर्महात्मनां ॥ विद्योतमानप्रमदोत्तमाभिः सवि
द्युदभ्रावलिभिर्यथा नभः ॥ श्रीर्यत्र रूपिण्युरुगायपादयोः करोति मानं बहुधा विभूतिभिः ॥ ऋचां त्वः पोषमास्ते पु
पुष्वान्गायत्रं त्वो गायति शक्करीषु ॥ ब्रह्मा त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उत्वः ॥ कामान्नरूपी चर
तीति पूर्वं श्रुत्या पुराणोक्तिभिरप्यदोषः ॥ देहः स्वरूपात्मक एव तेषां मुक्तिंगतानामपि चेयते हि ॥ शिरः कराद्यैरपि
मुक्तिभाजो युक्ता यतस्ते पुरुषा इदानीं ॥ यथेति पूर्वा अनुमाश्च जीवस्वरूपमंगादिकमावयंति ॥ न ब्रह्मरूपत्वम
मुष्य देहिनो मुक्तावपि स्यात्प्रमया कथंचित् ॥ स ब्रह्मणा सहितो शेषभोगान्भुंक्ते तथोपेत्य सुखार्णवं तं ॥ यत्तत्परं
ज्योतिरुपेत्य जीवो निजस्वरूपत्वमवाप्य कामान् ॥ भुंक्ते स देवः पुरुषोत्तमो ज आत्मेति चोक्तो गुणपूर्तिहेतोः ॥ से
तुः स देवो खिलमुक्तिभाजामुतामृतस्येष्ट इहेशितायत् ॥ इत्यादिवाक्यैर्भगवद्वशः सन्भुंक्ते खिलान्मुक्तिगतो

अनु व्याख्या.
॥७१॥ ४।२

पिभोगान् ॥ कालोप्यसौनैक्ययुतःपरेणजीवस्यकालोयतएषयद्वत् ॥ इत्यादिकाअप्यनुमाःप्रमाणंमुक्तौच
जीवस्यपरत्वरोधे॥कथंचयंःपूर्वमसौनपश्चाद्भवेत्सएवेत्यपियुक्तिमेति।यतोनदृष्टंयदभून्नपूर्वंपश्चात्तदासेतिकु
तश्चकिंचित्॥नचैवमुक्तेनहरेःपृथक्त्वमैक्यंतथास्यादितियुक्तिमेति।यतोनकुत्रापिभिदाभिदाचदृष्टाचितश्चे
तनयाकुतश्चित् ॥ इत्थंमतानिभ्रमजानियस्मान्मोक्षंसमुद्देश्यमपिभ्रमेण ॥ विदुर्नसम्यग्यदपीहलौकिकाःसु
खंममस्याद्धिसदेतिजानते॥ ७॥ औदार्यमुच्चावचशक्तिरात्मस्वरूपदार्ढ्यंचनिजस्वभावः ॥ स्वातंत्र्यमापू
र्णविशेषयोग्यताविरोधहानिश्चचतुर्थपादे ॥ व्यवस्थितिस्त्वविशेषस्थितिश्चनिषेधसामान्यविधिक्रियाणां॥वि
भक्तताचात्वरयैवसिद्धिर्विपक्षसंप्राप्तिविरोधहेतवः।सुशक्यताशश्वदतिप्रसिद्धिर्विवेकविन्यासविचारसंज्ञाः।
नानाप्रवृत्तिःकृतकृत्यताचविपक्षतर्काःसमतीतपादे।महाफलत्वंप्रविविक्तताचसंधिग्रहःसाधनमाप्तकृत्यं॥वि
शेषकार्यंकृतिसंस्थितिश्चसुयुक्तयोनिर्णयगाःस्वपक्षे । व्यामिश्रताकार्यकरत्वमर्थक्लृप्तिःसुदार्ढ्यंपरतंत्रताच॥स
मानधर्मःकृतशेषताचलोकोपमापूर्वमतानुसाराः।विशेषसाम्यश्रुतिराढ्यताचसमानलोपोमहिमाविशेषः।कृ ॥२३१॥
तार्थताशश्वदनुप्रवृत्तिःसिद्धांतनिर्णीतिविशिष्टहेतवः॥ ॥ॐनैकस्मिन्दर्शयतोहिॐ ॥ ॥ प्रधानवायुस्त्विह

वायुनामाभूतेष्विति प्रोक्तगतोपियुक्त्या॥यस्माच्छ्रुतौपवतेचेतिभूरिप्रोक्तोयतोभूतमानीचसोपि॥ महामा
नीत्वल्पमानीचयस्मात्तच्छब्देनाप्युच्यतेतेनसोपि॥५॥ ॥ ॐतानिपरेतथाह्याहॐ ॥ ॥ तस्मिन्लयंयांति
भूतान्यशेषक्रमाविरोधेनसएवविष्णौ॥इंद्रादीनांतत्रलयःक्रमंतुप्रोक्तंविशेषादनुसृत्यनान्यत् ॥ तस्मादशेषा
गिरिजांप्रविश्यतयैवरुद्रंसहतेनवाणीं ॥ तयापतिंप्राप्यसहैवतेनलयंहरौयांतिसमस्तजीवाः॥सोमस्तुवारीश
युतोनिरुद्धंविशत्यसौकाममसौतुवाणीं॥साशेषदेवंसगिरंचसैववायुंविशत्यंजइतीहनिर्णयः ॥ उमागिरीशा
वितिभारतीरावितिस्मवाग्वेदगताब्रवीति ॥ अहींद्रपत्नीमहिपंविरिंचपत्नीविरिंचंचविमुक्तिकाले॥तएवयत्त
त्पदमाप्नुवंतितत्कालएतान्समुपास्यजीवाः ॥ ब्रह्मत्वकालेप्रविशंतिचैतानितिस्मवाक्ताद्दशतामुपैति ॥ सू
र्योग्नियुक्तोगुरुमाप्यतेनशक्रंसहैतेनसुपर्णपत्नीं ॥ तयासुपर्णंसहतेनवाणींब्रह्माणमेतद्गतएवयाति ॥ इंद्रप्रवेश
स्तुयदोच्यतेत्रतदाह्युमेत्येवसुपर्णपत्नी ॥ उक्तासुपर्णश्चगिरीशनाम्नाततोविरोधश्चनकश्चनात्र ॥ भृग्वादयो
दक्षमवाप्यतेनप्राप्येंद्रमेतेनसुपर्णपत्नीं ॥ विशंतियेमनवोराजमुख्यामनुंप्रविश्यात्रगतामहेंद्रं॥ आकाशउर्वी
चगुरुंप्रविश्यतेनैषयातःपुरुहूतदेवं ॥ सनादयोयतयःकाममेवविशंतिशिष्टाअपिहव्यवाहं ॥ वर्णाश्रमाचारर

अनु
॥ ७२ ॥

तामनुष्याधर्ममतुंसोपिसमेतिकाले ॥ तमेवसर्वेपितरस्सुरानुगास्सर्वेकुबेरंसचसोममेव ॥ विमुक्तिकालेप्रवि
शंत्यभीक्ष्णंभोगांश्चतद्देहगताःप्रभुंजते॥आनंदसुव्यक्तिरमुत्रतेषांभवत्यतश्चेष्टतएवनिर्गताः॥ क्रीडंतिभूय
श्चसमाविशंतितानेवसायुज्यमिदंवदंति ॥ सायुज्यहीनास्तुलयेतुसर्वेप्रोक्तेनमार्गेणविशंतिसृष्टौ ॥बहिश्चनि
र्यांतिततोन्यदापिसायुज्यभाजांभवतिप्रवेशः ॥ उक्तंसमस्तंपरमश्रुतौहिप्रोक्तंचसर्गक्रमतोविपर्ययः ॥मुक्तौ
लयेयद्वदथोलयश्चविपर्ययेणेत्यवदद्गिरांप्रभुः । लयोयतोमुक्तिरियंसुराणांभोगोविशेषेणचयंवदिष्यति॥उक्त
श्चबिंबप्रतिबिंबभावःपैंगिश्रुतावुक्तलयानुसारतः॥बिंबेलयोयन्नियतश्चमुक्तौचिदात्मनांतद्वशताचसर्वदा।
तेजोभिधांतुश्रियमाप्यविष्णुमग्रेततःपुत्रतयैववायुः॥आप्तःप्रसूतःपुनरेवविष्णुंप्रविश्यमुक्तःप्रलयेत्रतिष्ठति।
सर्वेपितेमुक्तगणाअमंदसांद्रंनिजानंदमशेषतोपि ॥ भुंजंतएवासतईशदेहेलयेथसर्गेबहिरेवयांति ॥ प्रयाति
धर्मंनिर्ऋतिस्तुशक्रंमरुद्गणाःपारिषदास्तथैव ॥ सर्वेनिरुद्धंपृतनाधिपाद्यास्तुरश्रुतिर्हीत्थमियंविमुक्तिः ॥ इति
श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेचतुर्थाध्यायस्यद्वितीयःपादः ॥ ४॥२॥ ॥२३२॥
ॐ ॥ उत्क्रांतमार्गश्चविमुक्तगम्यंपादोदितं ॥ ५ ॥ सुक्रमविक्रमौच ॥ सांतानिकप्राप्तिरभीष्टताचसौकर्यमि

व्याख्या.
४।३

त्यन्यमतस्यतर्काः ।। विशेषसंप्राप्तिरुरुत्वमाप्तिः क्रमानुरागः कथितानुवृत्तिः ।। सिद्धांतनिर्णीतिकराः ।। ।। ॐ
अप्रतीकालंबनान्नयतीतिबादरायणउभयथाचदोषात्तत्क्रतुश्चॐ।। ।।प्रतीकंदेहादिकंतद्गतमेवयेनराः।। उपा
सतेतेपुरतस्समाप्नुयुर्ब्रह्माणमस्मान्मतिमाप्यविष्णुं।।प्राप्स्यंत्यतोन्येपितमाप्यतस्माद्धरिंगतामुक्तिभाजःपरां
ते।।६।।इतिश्रीम०भगवत्पादाचार्यविरचितेश्रीमद्ब्रह्मसूत्रानुव्याख्यानेचतुर्थाध्यायस्यतृतीयःपादः।।४ ।। ३।।
ॐ।। ।।अतिक्रमोक्तिःकृतिरर्थलाभःपरागतिःपारगतिस्तदोकः ।। समस्तकार्यंवशिताचविश्वसंभावनायुक्त
यस्त्वन्यपक्षे।।सामान्यरूपंप्रतिभानमुक्तिराश्चर्यताकृत्रिमतास्तदोषः ।। विशेषक्लृप्तिःकृतनिश्चयश्चमाहात्म्यमि
त्येवसुनिर्णयार्थाः ।।७।। ।। ॐअतएवचानन्याधिपतिःॐ ।। ।। अनन्यभृत्यत्वमिहोदितेभ्यस्त्वन्यस्यभृत्य
त्वनिवारणाय।।पतिंयदेषामपिविष्णुमाहह्युताम्रतत्वस्यपतित्ववाग्घरेः ।।एतेपिचान्याधिपतित्वयुक्ताविष्णव
न्यचित्त्वेनयथापुमांसः ।। प्रसिद्धिभाजस्त्वितिचानुमैवह्यभीष्टसिद्ध्यैभवतीहनिश्चयात ।। मुक्तस्वकीयावरयं
तृतास्तिमुक्तावपिब्रह्मपुरस्सराणां।।अनेनदेवेनतथामुनाचहीष्टेपरावीक्तनलोकिनामिति ।। फलंश्रुतिर्ज्ञानत
आहमुक्तावेतच्चसर्वाशुभनाशलिंगात्।।लोकाधिपत्यंचविधातुरेवसर्वात्मनेत्याहतुरश्रुतिश्च ।। सर्वेबलिंदेवग

अनु णावहंतीत्येतद्वनान्यस्यतुयुक्तिमेति ॥ लोकाइतीहापितुलोकिनांवचोलोकाइतिह्येवरवः प्रजासु ॥ प्रयुज्यते व्याख्या·
॥७३॥ सर्वजनैःसदैवतन्मानिनोलोकपदेनचोक्ताः ॥ तद्वास्तुमुक्ताइहलोकशब्दाअन्योन्यनाथाइतिपैंगिनांश्रुतिः॥ ४।४
अलोकशब्देनविमुक्तिभाजोवाच्याःपदंतादृगपीहयुक्तं॥ लोकाभिधाश्चापियतोहिमुक्ताःप्रकाशरूपाःसततं
चसर्वे॥ब्रह्मैवलोकाधिपतिर्विमुक्तोभवेदितिप्राहतुरश्रुतिश्च ॥ नचेहविज्ञानफलंसमुक्तंलोकाधिपत्यंरविबिंब
गेहरौ ॥ उक्तंपृथक्तच्चपुरैवयस्माद्भेदोमुनेत्यादिचसम्यगुक्तः ॥ त्वप्रत्ययंचात्यतिहायनैवरूपेणतेनेतिभवेदि
हार्थः॥भवत्यसावित्यणुशब्दमत्रविहायवाक्यानिबहूनिदोषः ॥ अतोजगद्व्याप्तिमंतएवब्रह्मादयःपूर्णगुणाः
क्रमेण॥अमंदमानंदमजस्रमेवभुंजंतआत्मीयमजात्समासते ॥७॥ नमोनमोशेषविशेषपूर्णगुणैकधाम्नेपुरुषो
त्तमाय ॥ भक्तानुकंपादतिशुद्धसंविद्धात्रेनुपाधिप्रियसद्गुणात्मने ॥८॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणि ॥२३३॥
दिव्यान्यलंबद्दतद्दर्शतमित्थमेवनिहितंदेवस्यभर्गोमहत्।वायोरामवचोनयंप्रथमकंपृक्षोद्धितीयंवपुर्मध्वोयत्तु
तृतीयमेतदमुनाग्रंथःकृतःकेशवे॥निःशेषदोषरहितकल्याणाखिलसद्गुण ॥ भूतिस्वयंभुशर्वादिवंद्यंत्वांनौमि

मेप्रियं ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रानुव्याख्यानेचतुर्था
ध्यायस्यचतुर्थःपादः ॥ ४ ॥ ४ ॥ अध्यायःसंपूर्णः ॥ ग्रंथश्चायंसंपूर्णः ॥ ॥ ॥





न्मूकोहमितिवत्सुधीः ॥ येनलक्ष्यमितिप्रोक्तंलक्ष्यशब्देनसोवदत् ॥ एकस्यापिहिशब्दस्यगौणार्थस्वीकृतौ
सतां ॥ महतीजायतेलज्जायत्रतत्राखिलारवाः ॥ अमुख्यार्थाइतिवदन्यस्तन्मार्गानुवर्तिनां ॥ कथंनजाय
तेलज्जावक्तुंशाब्दत्वमात्मनः ॥ ॥ ॐगौणश्चेन्नात्मशब्दात्ॐ ॥ ॥ ॐतन्निष्ठस्यमोक्षोपदेशात्ॐ ॥ ॥ आ
त्मब्रह्मादयःशब्दाःसाक्षात्पूर्णाभिधायिनः ॥ जन्मादिकारणंब्रह्मलक्षितंचयदातदा ॥ वंध्यापुत्रोपमंमायाश
बलंवाच्यमित्यपि ॥ कल्पयित्वाविनामानंलक्ष्यंशुद्धंवदन्पदैः ॥ आत्मशब्दोदितस्यैवज्ञानंमुक्तावसाधनं॥
आहश्रुतपरित्यागःस्याच्चास्याश्रुतकल्पना ॥ स्यात्सर्वत्रचयत्रैकमपिलोकोजुगुप्सते ॥ नियमेनोभयंस्याद्धि
यस्यस्वपरयोर्मते ॥ अलंकृतःसदैवायंदुर्घटैरेवभूषणैः ॥ अंधंतमोनित्यदुःखंतस्यस्याद्धसनद्वयं ॥ अनंदा
नामतेलोकाअंधेनतमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेविद्वांसोबुधोजनाः ॥ असुर्यानामतेलोकाअंधेन
तमसावृताः ॥ तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाः ॥ इत्यादिश्रुतयोमानंशतशोत्रसमंततः ॥ ॥
ॐहेयत्वावचनाच्चॐ ॥ ॥ हेयत्वावचनाच्चैवनात्मागौणःश्रुतौश्रुतः ॥ तमेवैकंजानथान्यावाचोमुंचथचे
तिह ॥ उक्तआत्माकथंगौणोहेयपक्षेह्यसौश्रुतः ॥ परिवारतयाग्राह्याअपिहेयाःप्रधानतः ॥ ॥ ॐस्वाप्यया

तॐ ॥ ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्यते ॥ इतिस्वस्यैवपूर्णस्यपूर्णोप्ययउदाहृतः ॥ कथंमायाव्यवच्छि
न्नःपूर्णोमुख्यतयाभवेत् ॥ ॥ ॐश्रुतत्वाच्चॐ ॥ ॥ पदंचनिर्गुणइतिकथंगौणंवदिष्यति ॥ गुणाभावोपल
क्ष्यंचेत्पदंतदपिवाचकं ॥ अतोनवस्थितिमुखसर्वदोषसमास्पदं ॥ कथमेतन्मतंसद्भिराद्रियेतविचक्षणैः ॥ नच
सांख्यनिराकृत्यैसूत्राण्येतान्यचीक्लृपत् ॥ भगवान्ब्रह्मशब्दत्वंप्रधानेंगीकरोत्यसौ ॥ समन्वयेप्रतिज्ञातेशब्दगो
चरतैवहि ॥ प्रथमप्रतिपाद्यास्यात्तदभावेकुतोन्वयः ॥ कथंचलक्षणावादीब्रूयाद्ब्रह्मसमन्वयं ॥ योसौशब्द
स्यमुख्यार्थस्तत्रैवस्यात्समन्वयः ॥ जन्मादिकारणेसाक्षादाहदेवःसमन्वयं ॥ उक्तंतदेवजिज्ञास्यंक्वावकाशो
त्रनिर्गुणे ॥ कथंचासंभवस्तस्यमुख्यार्थस्यनिराकृतौ ॥ मानेनकेनविज्ञेयमवाच्याज्ञेयनिर्गुणं ॥ अमेयंचेन्न
शास्त्रस्यतत्रवृत्तिःकथंचन ॥ तस्माच्छास्त्रेणजिज्ञास्यमस्मदीयंगुणार्णवं ॥ वासुदेवाख्यमद्वंद्वंपरंब्रह्माखिलो
त्तमं ॥ विज्ञेयवाच्यलक्ष्यत्वपूर्वाशेषविशेषतः ॥ निर्गतंमनसोवाचोयदितत्स्यादगोचरं ॥ अस्तुतन्मावदेद्वा
दीनचास्मच्छास्त्रगंतुतत् ॥ अवाच्यंवाच्यमित्युक्त्वाकिमित्युन्मत्तवन्मृषा ॥ अस्मच्छास्त्रस्यचौर्याययततेस्वो
क्तिदूषकः ॥ जन्मादिकारणंयत्तत्साक्षान्नारायणाभिधं ॥ वदंतिश्रुतयोब्रह्मशास्त्रंचैतत्तदर्थतः ॥ प्रवृत्तमस्य

पिचश्रुतौ ॥ जन्माद्यस्येतितेनैतद्विष्णोरेवस्वलक्षणं ॥ अस्योद्भवादिहेतुत्वंसाक्षादेवस्वलक्षणं ॥ कृष्णध्यान
च्छलेनैवस्वयंभागवतेब्रवीत् ॥ अतोजीवैक्यमपिसनिराचक्रेजगद्गुरुः ॥ नहिजन्मादिहेतुत्वंजीवस्यजगतो
भवेत् ॥ हिताक्रियादिदोषंचवक्ष्यत्येवस्वयंप्रभुः ॥ निर्गुणत्वंचतेनैवनिषिद्धंप्रभुणास्वयं ॥ भेदेनैवतुमुख्यार्थ
संभवेलक्षणाकुतः ॥ कथंनित्यगुणस्यास्यस्यादैक्यंगुणहानतः ॥ सदैवगुणवत्त्वेस्यभिन्नंस्यान्निर्गुणंसदा ॥ नच
मिथ्यागुणत्वंस्यादनिर्वाच्यस्यदूषणात् ॥ निर्गुणत्वंतदाचस्यादासुरत्वंनचान्यथा ॥ लक्ष्यलक्षणयोर्भेदोऽभेदो
वायदिवोभयं ॥ इतिपृष्टेतदैक्यस्यगतिरेवनविद्यते ॥ ऐक्याभेदेनशास्त्रेणज्ञेयंतत्स्वप्रकाशतः ॥ भेदेमिथ्या
त्वतोभेदसत्यत्वंस्याद्बलादपि ॥ भेदाभेदौयदितदास्यादेवह्यनवस्थितिः ॥ स्वनिर्वाहकताचेत्स्याद्ग्राह्यंवाहक
मित्यपि ॥ पर्यायोभेदवान्वास्यादनवस्थोभयत्रच ॥ सत्यज्ञानादिकेप्येवंनव्यावृत्त्याप्रयोजनं ॥ व्यावृत्तस्याविशे
षत्वेतदखंडंचखंडितं ॥ निर्विशेषत्वमेतेनमूकोहमितिवद्भवेत् ॥ अभिन्नेपिविशेषोयंबलादापततिह्यतः ॥ विशे
षतद्वतोश्चैवस्वनिर्वाहकताभवेत् ॥ भेदहीनेत्वपर्यायशब्दांतरनियामकः ॥ विशेषोनामकथितःसोस्तिवस्तुष्वशे
षतः ॥ विशेषास्तेप्यनंताश्चपरस्परविशेषिणः ॥ स्वनिर्वाहकतायुक्ताःसंतिवस्तुष्वशेषतः ॥ अतोऽनंतगुणं

२८

ब्रह्मनिर्भेदमपिभण्यते ॥ एवंधर्मानितिश्रुत्यातदभेदोप्युदीर्यते ॥ २ ॥ ॥ ॐशास्त्रयोनित्वात्ॐ ॥ ॥ शै
वाद्यागमसंप्राप्तदृष्टगेनफलेनतु ॥ तद्वाक्योपमयान्यच्चप्रमाणत्वेनुमीयते ॥ ईशवाक्यत्वतइतिचेत्तद्व्यभि
॥ ५ ॥ चारिणा ॥ अप्रामाण्यानुमाचस्यान्नपृथक्कानुमेश्वरे ॥ पुंस्त्वहेतुबलादेवपूर्वोक्तेनैववर्त्मना ॥ शास्त्रयोनित्व
मेतेनकारणस्यबलाद्भवेत् ॥ नावेदविन्नतर्केणमतिरित्यादिवाक्यतः ॥ तर्कोज्ञापयितुंशक्तोनेशितारंकथंच
न ॥ वनकृत्त्वादिरूपेणपक्षभूतस्यचेशितुः ॥ किंचिज्ज्ञत्वंहिपुंस्त्वेनशक्यंसाधयितुंसुखं ॥ वृक्षकृन्नाखिलंवृ
क्षंवेत्तिपुंस्त्वाद्धिचैत्रवत् ॥ इत्याद्यनुमयास्पर्धिनानुमानंपरेशितुः ॥ शक्तंविज्ञापनेचातिप्रसंगोनुमयेदृशा ॥
वस्तुत्वात्तुरगःशृंगीपुष्पवत्खंसुतैर्युता ॥ चित्रिणीचरसःषष्ठोरसत्वात्सोत्तरोभवेत् ॥ उपक्रमादिलिंगेभ्योना
न्यास्यादनुमानतः ॥ ३ ॥ ॥ ॐतत्तुसमन्वयात्ॐ ॥ ॥ तएवान्वयनामानस्तैःसम्यक्प्रविचारिते ॥ मु
ख्यार्थोभगवान्विष्णुःसर्वशास्त्रस्यनापरः ॥ ४ ॥ ॥ ॐईक्षतेर्नाशब्दंॐ ॥ ॥ ईक्षणीयत्वतोविष्णुर्वाच्यएवन
चान्यथा ॥ लक्ष्यत्वंकापिदृष्टंहिकिंतदित्यनवस्थितिः ॥ माधुर्यादिविशेषाश्चतच्छब्दैरुदिताःसदा ॥ वाक्या
र्थोपिहिवाक्यार्थशब्देनैवोदितोभवेत् ॥ नावाच्यंतेनकिंचित्स्याद्यतइत्यादिकैर्वदन् ॥ अवाच्यत्वंकथंब्रूया

वाच्यंतेनैवंब्रूयाःकथंचन ॥ सर्वशब्दैरवाच्यंतदुक्त्वातद्विषयंपुनः ॥ शास्त्रंवदंतमुन्मत्तंकथंलोकोनवारयेत् ॥
मावदोमाविजानीहित्यजास्मच्छास्त्रचोरतां ॥ वयंत्वांश्रुतियुक्तिभ्यांबध्वास्मच्छास्त्रमंजसा ॥ विचारयामः
श्रुतिभिर्युक्तिभिश्चैवसादरं ॥ अद्भुतत्वादवाच्यंतदतर्क्यंज्ञेयमेवच ॥ अनंतगुणपूर्णत्वादित्यूदेपैंगिनांश्रु
तिः ॥ अवाच्यमितिलोकोपिवक्त्याश्चर्यंतमंभुवि ॥ ५ ॥ ॥ ॐआनंदमयोभ्यासात्ॐ ॥ ॥ एवंशास्त्रा
वगम्यत्वेविभागेनसमन्वयं ॥ आनंदमयइत्यादिनाध्यायेनवदत्यजः ॥ तत्रान्यत्रप्रसिद्धानांविष्णावेवस
मन्वयं ॥ शब्दानांप्रथमेपादेगुणिसामान्यवाचिनां ॥ गुणवाचिनांचप्रथममाहदेवःसमन्वयं ॥ समुद्रशायिनं
सर्वप्रसूतिप्रभवंश्रुतिः ॥ तदेवब्रह्मपरममितिसावध्टतिर्जगौ ॥ यतोतोब्रह्मशब्दस्यतत्रैवनियतत्वतः ॥ येन्नं
ब्रह्मेत्यादिरूपादभ्यासात्तैत्तिरीयके ॥ अन्यासुचैतद्रूपासुशाखास्वपिसहस्रशः ॥ आनंदमयइत्याद्यैःशब्दै
र्वाच्योहरिःस्वयं ॥ उपलक्षणत्वंशब्दानामानंदमयपूर्विणां ॥ सूत्रस्याल्पाक्षरत्वेनसर्वशाखाविनिर्णये ॥ पुन
श्चप्रापकाद्धेतोस्तत्राधिकरणांतरं ॥ सर्वेवेदाआमनंतियत्पदंत्वितिहिश्रुतिः ॥ आनंदमयरूपेतुब्रह्मणःपुच्छ
तोक्तितः ॥ समस्ताब्रह्मताप्राप्तेरानंदमयनामहि ॥ ब्रह्मशब्दस्यचाभ्यासात्पंचरूपादिषुस्फुटं ॥ ब्रह्मतावयवेपि

अनु स्यात्तथावयविनिस्वतः ॥ यथैवकृष्णकेशस्यकृष्णस्यब्रह्मताखिला ॥ दर्शिताचैवपार्थायनिःसीमाःशक्तयोस्य व्याख्या-
हि ॥ ऋतंसत्यंपरंब्रह्मपुरुषंकृष्णपिंगलं ॥ विष्णवाख्यमुक्तमन्यत्रह्यूर्ध्वरेतंचतत्प्रति ॥ विरूपाक्षाख्यमपरंब्रह्मोक्तं ११।१
॥७॥ तद्व्रतेस्थितं ॥ समानाधिकृतत्वंचेदुत्तरंनीललोहितं ॥ कृष्णपिंगलरूपेणपुनरुक्तंभविष्यति ॥ ब्रह्माधिपतिरि
त्यत्रतापनीयश्रुतौपुरः ॥ स्वरितब्रह्मशब्दांतंबहुव्रीहित्वमेष्यति ॥ स्वाहेंद्रशत्रुर्वर्धस्वयद्बहुव्रीहितामगात् ॥ त
स्मादस्येंद्रएवाभूच्छत्रुरित्युत्तरश्रुतेः ॥ पूर्वांतस्वरितेपुंसोर्बहुव्रीहित्वमेष्यति ॥ महाव्याकरणेसूत्रमितिस्वरवि
निर्णये ॥ ऋतंसत्यंपरंब्रह्मेत्याद्युद्देश्यद्वितीयका ॥ विभक्तिरूर्ध्वरेतादिःप्रथमारुद्रगोचरा ॥ तस्माद्विष्णुंपरंब्रह्मप्र
तिरुद्रोव्रतेस्थितः ॥ ऊर्ध्वरेताइतिह्येवश्रुत्यर्थोऽवसितोभवेत् ॥ ऋतंसत्यंपरंब्रह्मप्रतिविष्णुंसदाशिवः ॥ ऊर्ध्वरेता
ध्यायतिहशंकरोनीललोहितः ॥ इत्यर्थमेतमेवाहनीलग्रीवश्रुतिःपरा ॥ आथर्वणीपरंब्रह्मतस्मादेकोहरिःश्रुतौ
॥ तदेवर्तमितिप्राहकथमेवान्यथाश्रुतिः ॥ अवधारयंतीतस्यैवह्यृतत्वादिकमंजसा ॥ एकोनारायणआसीन्नब्र
ह्मानचशंकरः ॥ वासुदेवोग्रएवासीन्नब्रह्मानचशंकरः ॥ नेंद्रसूर्यौनचग्रहोनसोमोनविनायकः ॥ इत्यादिवा ॥१६४॥
क्यतोविष्णोरुत्पत्तिरवतारगा ॥ मुख्यंब्रह्महरिस्तस्मात्प्रस्तावःपरमित्यपि ॥ मुख्यब्रह्मग्रहेयुक्तेनामुख्यंयुज्य

तेक्कचित् ॥ असंभवेहिमुख्यस्यगौणार्थांगीकृतिर्भवेत् ॥ ॥ ॐविकारशब्दान्नेतिचेन्नप्राचुर्यात् ॥ ॥ ॐप्रा
चुर्यार्थाश्चमयटःसर्वेऽत्रप्रतिपादिताः ॥ भोग्यत्वमत्रचाद्यत्वमुपजीव्यतयाहरेः ॥ महाभोक्तामहाभोग्यइत्यर्थो
न्नमयेभवेत् ॥ महाप्राणोमहाबोधोमहाविज्ञानवानपि ॥ विशेषसामान्यतयाविज्ञानंमनइत्यपि ॥ एकस्यज्ञा
नरूपस्यहरेरुक्तिर्विभागतः ॥ अभेदेपिविशेषेणैवान्यइत्युदितोहरिः ॥ भेदशब्दाविशेषंतुहरावन्यत्रभिन्नतां ॥
ब्रूयुर्हरेर्जीवजडैरपिभेदंहिमुख्यतः ॥ ब्रह्मतर्कवचोप्येवमतएकःसपंचधा ॥ उक्तोन्नमयइत्यादिभृगोश्चैतद्वदिष्य
ति ॥ प्राप्यत्वेनमयट्प्रोक्तेर्नतत्राप्यन्यदुच्यते ॥ प्रचुरान्नादिरेवातोह्यन्नमन्नमयेत्यपि ॥ उच्यतेह्यविशेषेणना
न्यत्किंचिदिहोच्यते ॥ ॥ ॐतद्धेतुव्यपदेशाच्चॐ ॥ ॥ महानंदत्वएवास्यहेतुःकोन्यादितिस्फुटं ॥ उक्तःश्रु
त्यंतरेयस्मात्सुखंलब्ध्वाकरोत्ययं ॥ करोतिनासुखीभूमासुखंनाल्पेसुखंभवेत् ॥ इत्युक्तंयत्प्रवृत्तिश्चनृत्तगानादि
कासुखात् ॥ दुःखाद्रोदादिकाचैवसर्वकर्तृत्वतोस्यच ॥ सर्वशक्तेर्नदुःखंस्यादतःकेवललीलया ॥ प्रवर्तकोन
चेदेषप्राण्यादन्याच्चकःपुमान् ॥ ॥ॐमांत्रवर्णिकमेवचगीयतेॐ ॥ ब्रह्मवित्परमाप्नोतीतियत्प्रथमसूचितं ॥
तदेवमंत्रवर्णेनसत्यंज्ञानमनंतवत् ॥ लक्षितंतत्रसत्यत्वंसृष्ट्यान्नप्राणयोरपि ॥ उक्तंज्ञानंतुमनसाविज्ञानेनाप्यु

दीरितं ॥ अनंतत्वंतथानंदमयवाचाप्युदाहृतं ॥सद्भावंयापयेद्यस्मात्सत्यंतत्तेनकथ्यते ॥ इतिसृष्टिरिहप्रोक्ता
जगत्सद्भावयापकं ॥ ब्रह्मेतिस्थापनायैवसत्त्वंजीवनमेवच ॥ विशीर्णताचसत्त्वंस्यात्सन्नमित्याहुरेवयत् ॥
अतोद्यतान्नृतान्नत्वंसत्यशब्दार्थएवहि ॥ प्राणंदेवाअनुप्राणंतिमनुष्याःपशवश्चये ॥ आयुःप्राणोहिभूताना
मितियद्भातिजीवने ॥ उक्तेसदितिधात्वर्थोगतिश्चातोहिसत्यता ॥ प्राणत्वमवबोधार्थोमनुधातुःप्रकीर्तितः ॥
नाल्पेसुखमितिप्रोक्त्यैवानंदमयतोक्तितः ॥ अनंतत्वंसुनिर्णीतंपूर्णानंदोहिनाल्पके ॥ अतोहिमंत्रवर्णोक्तवि
स्तृतिस्तुसमस्तया ॥ क्रियतेपरयायस्मात् ॥ ॥ ॐनेतरोनुपपत्तेःॐ ॥ ॥ इतरोत्रनकथ्यते ॥ पुरुषंवेत्ति
योमुच्येन्नान्यःपंथाहिविद्यते ॥ इतिश्रुतेरन्यवेदीकथंमुक्तिंप्रयास्यति ॥ पुरुषःपरआत्माजोब्रह्मनारायणःप्र
भुः ॥ माहानानंदउद्विष्णुर्भर्गओमइतीर्यते ॥ स्वयंनारायणोदेवोनान्यस्यैतानिकस्यचित् ॥ तस्मादोमित्यु
दाहृत्ययज्ञदानादिकुर्वते ॥ सूक्तेनपौरुषेणैनंयजंत्यध्यात्मकोविदाः ॥ इतिपैंगिश्रुतिस्तेननान्यज्ञानाद्विमु
च्यते ॥ ब्रह्मशब्दोदितेतस्मिन्नात्मशब्दंप्रयुज्यच ॥ तस्मादाकाशसृष्टिंचप्रोवाचात्रचतुर्विधां ॥ भूतंभूताभि
मानीचतद्देहोंतर्नियामकः ॥ हरिश्चाकाशशब्दोक्तोमुख्यतोहरिरेवच ॥ आसमंतात्काशतेयदाकाशोमुख्य

तोहरिः ॥ बलज्ञानस्वरूपत्वाद्वायुरग्निरगंनयन् ॥ आपआपालनाच्चैवपृथिवीप्रथितोयतः ॥ उष्टानामाश्रय
त्वेनसएवौषधिनामकः ॥ ओषधीषुस्थितोविष्णुःक्षुधितैराश्रितोभवेत् ॥ पुरिशेतेयतःसोथपुरुषश्चेतिगीयते॥
क्रियाप्रवर्तकत्वेनप्रादुर्भावोहरेर्जनिः ॥ आकाशादिषुनान्यास्तिह्यभिमानोभिमानिनः ॥ अभिमानिशरीर
स्यसाक्षाद्भूतस्यचोद्भवः ॥ एवंदेहादिपर्यंतमागतंहरिमेवतु ॥ परामृशतितस्यैवपंचरूपत्ववित्तये ॥ स्यत्काभूता
दिकंसर्वंसवाएषइतिश्रुतिः ॥ सइत्यात्मपदोद्दिष्टएषजीवशरीरगः ॥ सारान्नमयएवायंनलोकान्नमयःप्रभुः ॥
इतितंरसशब्देनविशिनष्टिशरीरगं ॥ इदमित्येवनिर्देशोवस्त्रप्रावृतवद्विभोः ॥ शिरआदेर्भवेज्जीवशिरआदौव्यव
स्थितेः ॥ तंविदित्वास्यमुक्तिःस्यान्नान्यज्ञानात्कथंचन ॥ ॥ ॐभेदव्यपदेशाच्चॐ॥ ॥आदित्येपुरुषेचायमिति
भेदोपदेशतः ॥ नास्याभेदोस्तिजीवेन ॥ ॥ ॐकामाच्चनानुमानापेक्षाॐ ॥ ॥ नानुमाकामचारिणी ॥ विमता
निशरीराणिमद्भोगायतनानियत् ॥ शरीराणीत्यादिकातुतत्त्वज्ञानेह्यपेक्षते ॥ प्रत्यक्षादिविरुद्धत्वादक्षागमभयो
ज्झिता ॥ अनुमाकामवृत्ताहिकुत्रनावसरंव्रजेत् ॥ जडआत्मैववस्तुत्वात्प्रमेयत्वाज्जडंचितिः॥घनआकाशइत्या
द्यावार्यंतेकेनहेतुना ॥ नजीवभेदसूत्राणांशंक्यात्रपुनरुक्तता ॥ वाक्यांतरद्योतकत्वात्पृथगित्यत्रपूर्णता ॥ ॥

अनु ॐअस्मिन्नस्यचतद्योगंशास्तिॐ॥ ॥योगमन्नमयाद्यैर्यत्फलत्वेनास्यशंसति॥ स्थानद्वयेप्यतःकोशाएतइत्यति व्याख्या-
साहसं॥ उपसंक्रमणंचैवद्वितीयोदेशितंप्रति॥ अतिक्रमंवदंतंतमुपशब्दोनिवारयेत्॥ अश्रुतस्यातिशब्दस्यस्था १।१
॥ ९ ॥ नंदद्यात्कथंपुनः॥ श्रुताश्रुतपरित्यागकल्पनेविगतह्रियां॥ मृतावेवपरित्यागःकृतोह्यन्नमयस्यच॥ येन्नंब्रह्मेत्या
द्युपासांसामानाधिकरण्यतः॥ उक्त्वापंचस्वरूपाणांपुनस्तत्प्राप्तिवादिनी ॥ स्थानद्वयगतावेदवाणीतदपला
पिनां ॥ तमसोन्यत्रसंस्थानंकथमेवसहेतसा ॥ अधीहिभगवोब्रह्मेत्युक्तोन्नप्राणपूर्वकं ॥ आहब्रह्मकथंतन्नद्वारं
तदितिवादिनः॥ उपसत्तिंकथंविद्युरुपसन्नायहित्रिशः॥ वक्तव्यंब्रह्मगुरुणाचतुर्वारमथापिवा ॥ सकृद्वेत्याग
माब्रूयुःसंप्रदायविदोपिच॥ तद्यत्किंचित्कथंब्रूयादुपसन्नायदिक्पतिः ॥ नवदेद्ब्रह्मचकथंमायावीनहिवारिश
द्॥ चष्टइत्येवतच्चक्षुःश्रवणाच्छ्रोत्रमुच्यते॥ वचनादेववाग्ब्रह्मसृष्टिस्थित्यादिकारणं ॥ तच्चवाधूलशाखाया
मष्टरूपमुदाहृतं॥ विज्ञानानंदसहितंपृथक्सृष्ट्यादिलक्षणैः॥ आवापोद्वापतःशाखायतआहुःपरंपदं॥ यतो
भूतानिजायंतइत्याद्यैर्लक्षणैःस्वयं॥ लक्षितंगुरुणापश्चात्तपसैवापरोक्षतः॥ दृष्ट्वैकैकस्वरूपंतुसमस्तोक्तानुदर्श ॥१६६॥
नं॥ इच्छताज्ञांगुरोःप्राप्यतपसैवापरोक्षितं॥ अब्रह्मेत्येववदतांश्रुतहान्यश्रुतग्रहौ॥ साक्षाल्लक्षणतांप्राप्ताविति

लज्जातदुक्तिषु॥ समीपेसहभोगस्यमुक्तित्वेनोक्तितोसकृत्॥ भेदोजीवेशयोर्मिथ्येत्येवमिथ्यास्वयंभवेत् ॥ ए
तेनमयटश्चैवद्वैविध्येनार्थकल्पनात्॥ तदन्येषांमतमपिसत्संसत्सुनभासते ॥ अतोनारायणोदेवोनिःशेषगुण
वाचकैः॥ गुणिसामान्यवचनैरपिमुख्यतयोदितः॥ अध्यात्मगैश्चप्राणाद्यैस्तथैवह्यधिभूतगैः॥ अन्नादिश
ब्दैर्भगवानेकोमुख्यतयोदितः ॥ जन्माद्यस्येतिसूत्रेणगुणसर्वस्वसिद्धये॥ ब्रह्मणोलक्षणंप्रोक्तंशास्त्रमूलंयत
स्ततः॥ अन्वयःसर्वशब्दानांगुणसर्वस्ववेदकः॥ शब्दप्रवृत्तिहेतूनांतस्मिन्मुख्यसमन्वयात्॥ अन्यार्थेष्वल्प
ताहेतोस्तन्निमित्तत्वतस्तथा॥ तद्वाचकत्वंशब्दानांबहुलातिप्रयोगतः॥ रूढमित्येवसाध्यंस्याद्रूढिर्हिद्विविधाम
ता॥ अविद्वद्विद्वदास्यैवमुख्याहिविदुषांतुसा॥ विद्वद्रूढिर्वैदिकास्यात्सायोगादेवलभ्यते॥ तस्मान्मुख्यार्थ
ताविष्णोरितिकृत्वाहहृदिप्रभुः॥ समन्वयंसाधयति॥६॥ ॥ॐअंतस्तद्धर्मोपदेशात्ॐ॥ ॥ देवानांतत्र
शक्ततां॥ आशंक्यतत्ररूढिंचतच्छब्दानामपिस्वयं॥ समुद्रांतस्थितत्वाद्यैस्तद्धर्मैर्विष्णुरूढतां॥ साधयित्वा
भिदांतैश्चपुनरेवान्यवारयत्॥७॥ ॥ॐआकाशस्तल्लिंगात्ॐ॥ ॥चेष्टाहिचेतनानांयासाभवेत्तत्प्रसादतः॥
अचेतनस्वभावस्तुविवरादिःकथंततः॥ इतिशंकानिवृत्त्यर्थमाकाशइतिनामच॥ परतोपिवरीयस्त्वपूर्वोलिंगा

अनु ॥ द्धरेर्भवेत् ॥ नभोददातिश्वसतांमार्गंयन्नियमाददः ॥ इत्यादिवाक्यैः ॥ ८ ॥ ॥ ॐअतएवप्राणःॐ ॥ ॥ अ व्याख्या.
ध्यात्ममन्वयव्यतिरेकतः ॥ प्राणादिहेतुताद्दृष्टेरतिदेशोहिताद्दृशः ॥ लिंगंबलवदेवस्यात्प्रेरकोस्यापियद्धरिः १।१
॥१०॥ ॥ ९ ॥ १० ॥ ॥ ॐछंदोभिधानान्नेतिचेन्नतथाचेतोर्पणनिगदात्तथाहिदर्शनंॐ ॥ ॥ नित्यत्वादेवशब्दस्य
तत्स्वभावःकथंहरेः ॥ कथंप्रसिद्धबहुलशब्दानामन्यथार्थता ॥ इतिचेत्तद्धरेरेवबाहुल्याच्छ्रुतिलिंगयोः ॥ ताद्द
शत्वाच्चतच्छक्तेः ॥ ११ ॥ ॥ ॐप्राणस्तथानुगमात्ॐ ॥ ॥ बाहुल्येश्रुतिलिंगयोः ॥ अन्यस्यमुख्यवाच्यत्व
मितितन्मात्रगस्यहि ॥ विष्णावेवतुलिंगानिप्राणस्थानितुसर्वशः ॥ प्राणसंवादपूर्वाणिमुख्यतोजीवगानिच ॥
अभ्यार्चेच्छतवर्षाणिप्राणवंशत्वमित्यपि ॥ तस्मादन्यत्रगैःशब्दैरुक्तन्यायैःसमंततः ॥ एकोनारायणोदेवोभण्यते
नात्रसंशयः ॥ वासुदेवादिरूपेणचतुर्मूर्तिश्चसर्वशः ॥ अथवापंचमूर्तिःसप्रोक्तोधिकरणंप्रति ॥ प्रतिसूत्रंप्रतिप
दंप्रत्यक्षरमथापिवा ॥ तैस्तैर्युक्तिश्रुतिन्यायविशेषैर्योग्यतायथा ॥ बृहत्तंत्रप्रमाणेनबह्वर्थमपिसंग्रहात् ॥ उच्यते
नरबुद्धीनामपिकिंचिद्ब्रहार्थतः ॥ ग्रंथोयमपिबह्वर्थोभाष्यंचात्यर्थविस्तरं ॥ बहुज्ञाएवजानंतिविशेषेणार्थमेत ॥१६७॥
योः ॥ तस्मान्महागुणोविष्णुर्नाम्नामपुनरुक्तितः ॥ १२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेश्री